# सूचीपत्रम् ।

| | | |
|---|---|---|
| गणपाठः | ० | |
| गोलप्रकाशः | २ | |
| गङ्गालहरी | ० | |
| गुरुसारणी | ० | |
| ज्ञानसारत्वम् | ० | |
| तत्त्वदीप | ० | |
| तर्कसंग्रहः | ० | |
| दत्तकमीमांसा | ० | |
| धर्मशास्त्रसंग्रह | ० | |
| धातुपाठः ( जिल्द -) ) | ० | |
| धातुरूपावली | ० | |
| नैषध चरित नारायणी टीका टाइप | ४ | |
| परिभाषापाठः | ० | |
| पाणिनीयशिक्षा भाष्यसहिता | ० | |
| प्रथम परीक्षा | ० | |
| प्रथमपुस्तक हिन्दी | ० | |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | १ | |
| लघुकौमुदी टिप्पणीसहिता | ० | ६ |
| लघुकौमुदी भाषाटीका | ४ | ८ |
| लक्षणावली | ० | २ |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० |
| वसिष्ठसिद्धान्तः | ० | १ |
| विष्णुसहस्रनाम | ० | १ |
| शब्दरूपावली | ० | १ |
| शृङ्गार सप्तशती | १ | ८ |
| समासचक्रम् | ० | १ |
| समासचन्द्रिका | ० | १ |
| सरस्वतीकण्ठाभरणम् | ३ | ० |
| सांख्यचन्द्रिका टिप्पणीसहिता | ० | ८ |
| सांख्यतत्त्वकौमुदी | ० | ६ |
| सिद्धान्तकौमुदी | ३ | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | १ | ० |
| उपसर्गार्थ | ० | |
| क्षेत्रकौमुदी | | |
| क्षेत्रसंहित | | |

त्रिप्रभृतिभिरुच्चस्थै राजानो नृपवंशजाः ।
चतुरादिभिरन्येपि त्रिकोणोपगतैस्तथा ॥ ३८ ॥
एकादिभिरारिस्तेत्रे गतैर्नीचगतैरपि ।
दारिद्रो दुःखितो मूर्खो व्याधितो बन्धनान्वितः ॥३९॥
अभिनष्टो वधं प्राप्तः क्रमाज्जातो भवेन्नरः ।
एकोपि परमोच्चस्थः सुहृद्दृष्टो नृपत्वदः ॥ ४० ॥
द्व्यादिभिर्बलिभिःकेन्द्रे गते नृपसुतो नृपः ।
वर्गोत्तमस्थिते चन्द्रे चतुरादिभिरीक्षिते ॥ ४१ ॥
भवत्यन्योऽपि नृपतिः किमुत क्षत्रियोद्भवः ।
वर्गोत्तमांशे लग्नस्य चतुरादिभिरीक्षिते ॥ ४२ ॥
तदापि क्षत्रियो द्वाभ्यां योगाभ्यां नृपराट् भवेत् ।
ऋक्षसन्धिषु सञ्जातो न चिरञ्जीवति ध्रुवम् ॥ ४३ ॥
यदि जीवेत्तदा रुग्णो वाहनाद्यैः समृध्यति ।
वर्गोत्तमगताः क्रूराः शुभगाश्च गुणोत्तराः ॥ ४४ ॥
वर्गोत्तमं नरं कुर्य्युर्यवनेश्वरदर्शने ।

सर्व्वैश्चरादिनिलयैस्त्रय आश्रयोत्था
रज्जुःक्रमेण मुसलश्च नलस्तृतीयः ।
ईर्ष्यान्वितः प्रचुरमानयुतो धनाढ्यः
सर्व्वेऽपि [illegible] प्रसिद्धाः ॥ ४५ ॥
[illegible] जन्मदः ।
[illegible] न्मदः ॥ ४६ ॥

त्रिप्रभृतिभिरुच्चस्थै राजानो नृपवंशजाः ।
चतुरादिभिरन्येऽपि त्रिकोणोपगतैस्तथा ॥ ३८ ॥
एकादिभिरारिक्षेत्रे गतैर्नीचगतैरपि ।
दारिद्रो दुःखितो मूर्खो व्याधितो बन्धनान्वितः ।
अभिनम्रो वधं प्राप्तः क्रमाज्जातो भवेन्नरः ।
एकोऽपि परमोच्चस्थः सुहृद्दृष्टो नृपत्वदः ॥ ४० ॥
द्व्यादिभिर्बलिभिःकेन्द्रे गते नृपसुतो नृपः ।
वर्गोत्तमस्थिते चन्द्रे चतुरादिभिरीक्षिते ॥ ४१
भवत्यन्योऽपि नृपतिः किमुत क्षत्रियोद्भवः ।
वर्गोत्तमांशे लग्नस्य चतुरादिभिरीक्षिते ॥ ४२ ॥
तदापि क्षत्रियो द्वाभ्यां योगाभ्यां नृपराट् भवेत् ।
ऋक्षसन्धिषु सञ्जातो न चिरञ्जीवति ध्रुवम् ॥ ४३
यदि जीवेत्तदा रुग्णो वाहनाद्यैः समृध्यति ।
वर्गोत्तमगताः क्रूराः शुभगाश्च गुणोत्तराः ॥ ४४ ॥
वर्गोत्तमं नरं कुर्य्युर्यवनेश्वरदर्शने ।

सर्व्वैश्चरादिनिलयैस्त्रय आश्रयोत्था
रज्जुःक्रमेण मुसलश्च नलस्तृतीयः ।
ईर्ष्यान्वितः प्रचुरमानयुतो धनाढ्यः
सर्व्वेऽपि ते स्वकुलगोत्रजने प्रसिद्धाः ॥ ४५ ॥

त्रिकोणगैर्यमारार्कैः सर्प्पो दुःखितजन्मदः ।
दलयोगस्तथा जीवसितनक्षैर्भोगिजन्मदः ॥ ४६ ॥
अष्टादशाकृतिः प्राप्ता गदानन्तरकेन्द्रगैः ।
तत्र जातो [illegible]त्रानर्थवत्सलमः ॥ ४७ ॥

तत्रजःशकटाजीवी कुत्सितात्मजदारवान् ॥ ४८ ॥
विहङ्गःखचतुर्थस्थैस्तत्र दूतः कलिः प्रियः ।
लग्नपञ्चमधर्म्मस्थैः शृङ्गाटकमतः सुखी ॥ ४९ ॥
शृङ्गाटकविरोधेन हलस्तत्र कृशीबलः ।
सर्व्वकेन्द्रगतः सर्व्वैः पद्मस्तत्र धनी भवेत् ॥ ५० ॥
वापीकेन्द्रेतरस्थैश्च सुखहीनो भवेन्नरः ।
विलग्नादिचतुःस्थैश्च यूपोऽस्मिन् दानतत्परः ॥ ५१
चतुर्थादिचतुःस्थैश्च चरस्तत्र च हिंसकः ।
सप्तमादिचतुःस्थैश्च शक्तिस्तत्र धनी नरः ॥ ५२ ॥
दशमादिचतुःस्थैश्च दण्डस्तत्र प्रियोज्झितः ।
लग्नादिसप्तगैर्नौका तत्र कीर्त्तिः सुखोत्तरः ॥ ५३ ॥
मित्रादिसप्तगैःकूटस्तस्मिन्ननृतभाषणः ।
अस्तादिसप्तगैश्छत्रमित्रस्वजनवत्सलः ॥ ५४ ॥
कर्म्मादिसप्तगैश्चापस्तत्र मध्यसुखी पटुः ।
कण्टकेतरसप्तस्थे रर्द्धचन्द्रः सुरूपवान् ॥ ५५ ॥
लग्नादेकान्तरस्थैश्च चक्रं तत्र नृपाश्रितः ।
अर्थादेकान्तरस्थैश्च समुद्रस्तत्र भोगवान् ॥ ५६ ॥
एवमाकृतिजा योगाः सर्व्वे स्वार्जितसम्पदः ।
यथा यथाग्रहैः सर्व्वैः सप्तस्थानसमाश्रयैः ॥ ५७ ॥
वीणायोगस्तत्रो जातः सङ्गीतकुशलः पटुः ।
क्रमादन्येपि षड्योगाः [1]वीणाल्लक्षणवर्जिताः ॥ ५८ ॥
दाम-पाशश्च केदारः शूलं युगश्च गोलकः ।
पापमिपश्च दुर्म्मोल्लः कृषिकृद् घातकस्तथा ॥ ५९
दारिद्रो दुःखितश्चेति क्रमात्तेषु फलोदयः ।

---

१ मर्पीकेन्द्रेतुरस्थैश्च । २ स्मरः । ३ षं

सङ्ख्यायोगा इमे सप्तनाभसार्त्रिंशदीपिता ॥ ६० ॥
एते सर्व्वदशास्वेव फलन्ति क्रमशोऽधमाः ।

कन्योदयस्थो रविरस्य पुत्रो
मीनस्थितश्चेत्प्रतिहन्ति भार्य्याम् ।
[1]हिनस्ति भौमः सुतमात्मजस्थः
सूर्य्यश्च धर्म्मस्थितवांश्च सत्तम् ॥ ६१ ॥

नित्यं मध्यगतिं मेघोश्चपलःसत्खलितो व्रतः
अस्थिरश्रीः सुहृद्बन्धुश्चरक्षेत्रेषु जातवान् ॥ ६२ ॥
दीर्घसूत्रःक्षमायुक्तः सत्यवादी सुहृद् स्थिरः ।
अविनष्टविभूतिश्च स्थिरक्षेत्रेषु जातवान् ॥ ६३ ॥
धीरोदारःकृतज्ञश्च सोद्यमो विविधक्रियः ।
दाता नष्टोदितश्रीश्च द्विस्वभावेषु जातवान् ॥ ६४ ॥
ग्राम्या रण्याब्जभोत्पन्ना स्तत्तच्छीला भवन्ति हि ।
चन्द्रराशिवशाद् ज्ञेयाः लग्नराशिवशादपि ॥ ६५ ॥
तस्करो बहुभोक्ता च पण्डितो वित्तवान् नृपः ।
क्लीवःशूरो दरीद्रश्च दुर्ज्जनःपापरोचकः ।
उग्रःश्रेष्ठश्च मेधावी नवलग्नांशकोद्भवः ॥ ६६ ॥

मन्त्रौषधेषु कुशलःसुभगः कलावान्
शूरो धर्नार्विरतिनः सुरनिमियश्च ।
ताम्राम्बकःसमराजिघतुरोऽटनेषु
निःघुनुरास्थिरधनः मथमर्क्षजातः ॥ ६७ ॥
सेवापटुःपरधनः मणयी सहिष्णु
द्वेषी विषादबहुलःमान्निसमियश्च ।
स्त्रीनिर्जितः मकलरःपिशिमाशनश्च

१ हिनस्तिच ॥ २ हो ॥

श्राद्धपचारनिरतः किल पुष्यजन्मी ॥ ७४ ॥

शीर्षोन्नतः प्रचुरभक्षणबद्धबुद्धि-
र्द्वेषोल्बणः क्षपणकः प्रणयीन्द्रमायी ।
उच्चःशिरास्तततनुर्विधुरः शर्पा[illegible]
मूर्खः परस्वमुखितो भुजगर्क्षजन्मा ॥ [illegible] ॥

अल्पात्मजः पृथुतनुः समसंहतात्मा
शैलाटवी प्रणयवान् सुखितः सदैव ।
निसामयो युवतियोगविपण्णचेताः
सीमातिगो गुरुजनेषु मघाभिजातः ॥ ७६ ॥

क्रूरो विरूपतरमूर्तिरकार्य्यकोपी
युद्धप्रियःप्रियतमाभिरतःकृतघ्नः ।
वल्पःसुशीलनयवित्तविवर्ज्जितश्च
विप्रप्रियः सुनिपुणश्च भगाभिजातः ॥ ७७ ॥

शास्त्रार्थवित्परवधूनिरतो दयावा
नल्पात्मजः कृशतनुः कृतयोगिमह्वयः ।
सौम्यः परोपचरितो मधुराशनश्च
कान्तःसुनीतिनिधिरुत्तरफाल्गुणीजः ॥ ७८ ॥

लज्जान्वितःकुलिशार्धबहुमाननीयः
कान्तःस्वपालुरणपःकटुकाम्लभोजी ।
सद्मप्रवानुपभोगविनष्टवित्तः
पान्योत्तमः प्रमुदितश्च कराभिजातः ॥ ७९ ॥

कामी कठोरहृदयो बहुशिल्पवेदी
कार्य्यप्रियः सुमन्त्रितश्च जनन्दबन्धुः ।
मांसःप्रभूतविभवः मदनेषु मत्तः
श्यामःप्रभुःकिल चतुरस्त्वष्ट्रभाभिजातः ॥ ८० ॥

देवद्विजस्वजनपितृजनस्वपरीतिः
स्त्रीनिर्जितः कफमरुत्प्रकृतिः कृतघ्नः ।
धन्यः प्रियः सुनिपुणः क्रयविक्रयेषु
[1]रोगान्वयः समनिधिःखलु याम्यजन्मा ॥ ८१ ॥
क्षिप्रःसुहृत्र सुवक्ता,रिपुसुमानिद्दः
गन्धकपुष्परनिनःद्विजिनिपान्यपूज्यः ।
अन्तान्तरोगविपुरञ्जपत्नार्थतुल्यः
कृशानुगःमणिधिचिन्द्रकृशानुजन्मा ॥ ८२ ॥
प्रियप्रियः परमगापुरगोशनिन्द्रः
मध्यमपापहृदयः कृशदीर्घगात्रः ।
तीक्ष्णो विशुद्धवनितामणयी नयज्ञः
मेधारतस्त्रैनयथानपिविधिजातः ॥ ८३ ॥
उग्रःप्रतापनिलयः परदूषणज्ञः
मन्नान्वितःशठमतिर्नृपलब्धवित्तः ।
मिथ्याप्रलापनिपुणःकफवातमूर्त्तिः
पापक्रियासु चतुरःकिल शक्रजातः ॥ ८४ ॥
प्राज्ञःकविर्जनकलब्धधनःसदर्थः
कीर्त्तिप्रियः परिजनानुगतो यशस्वी ।
ह्रस्वः प्रसन्नसुतबन्धुरसत्यसन्धः
स्त्रीनिर्जितःस्वकृपणः किल मूलजातः ॥ ८५ ॥
कर्म्मोद्यतः सलिलजातधनः सवीर्य्यः
त्यागी विशालदशनो गुरुविप्रयुक्तः ।
विद्याविवेकरहितः कलहप्रियश्च
नित्याधनः कुनखवान् सलिलाभिजातः ॥ ८६ ॥

---

१ रोगायसस्मयनिभिः ।

शीतालुराहवजयी बहुबन्धुमित्रो
धर्म्मध्वजो नृपगृहप्रभुरिङ्गितज्ञः ।
शूरो नितान्तकमनीयतनुः कृशाङ्गः
सम्पन्नभूतिरणघः किल विश्वजातः ॥ ८७ ॥
विद्वानगम्यवनितानिरतःप्रकाशो
ज्ञातेन्द्रजालचरितो भुजशक्तिशाली ।
शाठ्यःप्रयोगनिपुणः क्षितिपालमुख्यः
सौभाग्यभाग्यनिलयः श्रवणाभिजातः ॥ ८८ ॥
सत्याधिकःसलिलकेलिरतःकृतघ्नः
श्रीमान् निगूढचरितः परपीड़नेच्छुः ।
शौरःशिरालकरणः कविबन्धुलुब्धो
नीचाङ्गनासुनिरतो वसुभमजातः ॥ ८९ ॥
क्रूरःपृथुरुचरणःकरभाभकण्ठः
पापप्रियश्च चटरःसपट्टाद्धियुक्तः ।
सत्यालपः सुबहुवृद्धवधूपतिश्च
सर्व्वोन्नतिः सुमतिमान् शनभमजातः ॥ ९० ॥
क्षोणीजलब्धविभवः सुभगो यशस्वी
गूढक्रियःसणविहीनविवृद्धवित्तः ।
उद्दामहरिचरपटुः कविरिङ्गितज्ञः
सद्बन्धुमित्रपुरुषः परुपोजपादः ॥ ९१ ॥
सर्व्वप्रियःसमप्रभुःमहतगात्रमान्धिः
सन्धानसत्यवचनैःसल्लिलोदिनश्च ।
: परदारसक्त
॥ ९२ ॥

नलिलोदिनश्च

अश्विनीमृगशिरःपुनर्व्वसुपुष्यमित्रहरिमित्रवायवः ।
रेवतीतिनवतारकागणः कीर्त्यते त्रिदशसात्मनां गणः॥१०४॥
उत्तरत्रयमार्द्रश्च रोहिणी भरणी तथा ।
पूर्व्वत्रयमितिप्राहुर्मानुषाणां गणःस्मृतः ॥ १०५ ॥
आश्लेषाग्नेयमूलेन्द्रधनिष्ठाशततारकाः ।
चित्रामघाविशाखाश्च राक्षसा नवतारकाः ॥ १०६ ॥
तुरङ्गश्चाश्वमातङ्गौ मेषीसर्पश्चपन्नगी । [1]
स्वाविड़ालश्च वस्तश्च मार्ज्जारीमूषिकाखवः ॥ १०७ ॥
वृषभो महिषी व्याघ्री लुलायो व्याघ्रकामिनी ।
मृगी तुरङ्गी च शुनी कपिर्धेनुःप्लवङ्गमः ॥ १०८ ॥
नारी च शारमेयश्च नरश्च वृषभस्तथा ।
करिणीतिक्रमादेते अश्विभादेश्च योनयः ॥ १०९ ॥
गणान् योनिश्च वृक्षांश्च तत्तन्नक्षत्रजन्मिनाम् ।
भावसत्वं गुणं शौर्य्यश्चादिशेद्दैवचिन्तकः ॥ ११० ॥[2]
पुञ्जातकफलं सर्व्वं तुल्यं स्त्रीजातके भवेत् ।
किन्त्वत्र चन्द्रलग्नश्च सप्तमश्च विचार्य्यते ॥ १११ ॥
लग्नत्वे चन्द्रयोगो वा युग्मराशिमुपागतः ।
सती रूपवती नारी गुणिनी ललितोत्तरा ॥ ११२ ॥
ओजराशौ नराकारा दुर्भगा कुलटा तथा ।
अबलस्थेन संदृष्टे भर्ता कापुरुषो भवेत् ॥ ११३ ॥
कुजेऽस्तगे शुभे दृष्टे शैशवे विधवा भवेत् ।
भास्करे धवसंसक्ता सौरे कन्येव जीर्य्यते ॥ ११४ ॥
क्रूरैःसप्तमराशिस्थैः विधवैव भवेद्ध्रुवम् ।
मिश्रेऽत्र सौम्यैःपापैश्च पुनर्भूरीतिनिश्चिता ॥ ११५[3]

---

१ मिश्रा । २ पन्नसी । ३ निश्चिता ।

यद्यत्र पतते स्त्रीषु शुभं वा यदि वा शुभम् ।
तत्तद्भर्तृयुता सा हि चिन्तनीया विपश्चिता ॥ ११६ ॥
हुतभुक् सलिलं शस्त्रं ज्वरश्चामय एव च ।
तर्षःक्षुधेति सूर्य्यादिग्रहणां मृत्युहेतवः ॥ ११७ ॥
निधनस्थेन मृत्युःस्यात्तदिदं पश्यता तथा ।
लग्नादि तद्द्रेष्काणस्य योविंशस्तद्ग्रहेन वा ॥ ११८ ॥
शीलाश्रयात्पथ्यनिसेवनाच्च मुन्याधिसा सर्व्वजनेषु मैत्र्याः।
मृत्यूपगमाणिविमोक्षणाच्च स्वेल्पायुषो जीवितमेधते हि ११९

इति योगगुणादेशोनाम पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः ।

पूर्व्वत्र जन्मनि कृतानि शुभाशुभानि
जातांविभाव्यपद्वभेदसमाश्रयानि ।
धन्यानराश्च धनिनश्च विभावयन्ति
वक्ष्यामि लक्षणविनिश्चयमल्पमस्मिन् ॥ १ ॥
ऊर्ध्णापिशृष्णेतररश्मिखण्ड
सनानमाविष्कुरुते नरेन्द्रम् ।
यालि त्रिशूलाकृति रुज्वलन्ती
श्रेष्ठां जनानां जनयेत् समृद्धिम् ॥ २ ॥
केशाःप्रशस्ता स्फुटितेतराग्राः
स्निग्धाः सुनीलाः कुटिलावसनाः ।

---

१ भर्तृसुता । २ चिन्तनीयः । ३ लग्नादि द्द्रकाणस्य । ४ स्व-
ल्पायुषं । ५ जातांविभावय ।

द्विधा विभिन्ना द्विपकुम्भतुल्य
शिरोभवेदन्यवधूरतानाम् ॥ ३ ॥
शतायुषः पञ्च भवन्ति खण्डा
रेखाललाटेषु ततः क्रमेण ।
ऊनं पुनर्विंशतिवत्सराणां
प्रत्येकमायुर्मनुजेषु कुर्यात् ॥ ४ ॥
ऋज्वी भवेत् क्रूरतरात्मनो भ्रू-
र्रोमशा लोभवतो नरस्य ।
ओष्ठौ तु मध्ये ऽपचितौ सुरक्तौ
सुखेन दन्तावरणौ प्रशस्तौ ॥ ५ ॥
दृष्टिस्तु पक्ष्मलपुटापरदारसक्ता
माकेकरापिशुनमक्षमर्मञ्जुनश्रीः ।
सङ्ग्रामशूरमरुणा सदयश्च नीला
पिङ्गा तु दुष्टमनसः खलु बुद्बुदाभा ॥ ६ ॥
आपीनगण्डौ धनिनं दधाते
मिथ्यावचःसक्तमरोमसौ तौ ।
कण्ठोऽतिदीर्घः कृपणो धनाढ्यः
सुसङ्गतो ह्रस्वतरश्च निःस्वः ॥ ७ ॥
जिह्वा करोति विपुला सुधियं कृशा तु
मूर्खं दृढार्थपरधीः सुखिनश्च मृद्वी ।
नासाश्रियं वितनुते शुकतुण्डतुल्या
भूरिव्ययश्च किपटा चिरजीवितश्च ॥ ८ ॥
आखुश्रवा भवति वाङ्मयपारदृष्टो
दीर्घायुषो भवति रोममकर्णपाली ।

---

१ निम्नम ॥ २ सुवपाश्च ॥

श्रीरेखेत्यपरानतो नृपरतो वाण्या गुणोल्लासिनी
ता विश्लिष्टतरः परस्परमिहश्रेयः परं कुर्व्वते ॥ १७ ॥
आमध्यमुद्गतवतीमनिबन्धनस्तु
रेखा करे मतिपुतं बलिनञ्च धत्ते ।
सामत्स्य पुच्छसदृशा यदि मूलतःस्या
दग्रेच कुन्तसदृशा कुरुते च भूपम् ॥ १८ ॥
र्व्वाङ्गुली मूलभवोर्द्धरेखा पर्व्वण्यधस्तान्मुनिभिः प्रशस्ता ।
गारोग्यनामस्तुतिलाभपुत्रान् धत्तेकनिष्ठादिभवां क्रमेण ॥१९॥
रवाकृतिःपाणितलस्य मूले चाङ्गुष्ठपर्व्वस्त्वपि सुप्रशस्ता ।
मपर्व्वपर्व्वण्यपि चाङ्गुलीनामग्रेपु वक्राकृतयश्च भद्राः ॥२०॥
अङ्गुष्ठमूले जनयन्ति पुत्रान् रेखा ब्रहत्यस्तनुकाश्च पुत्रोः ।
तहोदराः स्युःकरभस्य मूले तस्यैव चान्त्यं वनिता विकल्प्या२१
कनिष्ठिका कोटिरनामिकायाः तृतीयपर्व्वस्य रुपादतीता ।
धत्तेच भूप तुलितास्ववर्गश्रेष्टं तद्नामुतवित्तहानम् ॥ २२ ॥
सर्व्वाङ्गुलीष्वग्रभवोर्द्धरेखा कुर्य्याद्धराधीश्वरवल्लभत्वम् ।
स्थूलास्तथाल्पा कृपणं हि रेखा वच्मस्तपीडां निपुणञ्च सूक्ष्मा २३
अम्भोजचक्रां कुसकुण्डलानां दम्भोलिशङ्खध्वजवारिजानाम् ।
चिह्नानि कुर्य्युःमनुजं नरेशं पादेपि चैवं विहितोर्ध्वरेखा ॥२४॥
त्रयो विसालाः गम्भीराः ह्रस्वाश्चत्वार ईप्सिताः ।
पञ्च दीर्घाश्च सूक्ष्माश्च षट् तुङ्गाः सप्त लोहिताः ॥ २५ ॥
धत्ते विशालं कटिमिष्टभार्य्या मुरोविशालं विजयश्रियाङ्कम् ।
मूर्द्धा विशालो धनधान्यभाजं धीराविशालत्रयमेवमाहुः ॥२६॥
स्वरो गभीरो मधुरान्नभाजं नाभी गभीरा पितृवित्तभाजम् ।
सत्वं गभीरं जयिनं विधत्ते धीरा गभीरत्वयमेव माहुः ॥ २७ ॥

---

१ नामस्तुटि । २ सूलशास्ता ।

ह्रस्वो गलो गुणधनं कुरुते च पृष्ठं
ह्रस्वं प्रशस्तनशयनं मदनध्वजस्तु ।
ह्रस्वोनरेश्वरमितः प्रबलाच जङ्घा
ह्रस्वेति सर्व्वकचतुष्टयमेवमाहुः ॥ २८ ॥
सुदीर्घबाहुश्चिरकालजीवी सुदीर्घनेत्रः प्रचुरार्थलाभी ।
सुदीर्घनासास्थिरमित्रबन्धुर्लोकप्रियो दीर्घहनुःप्रदिष्टः ॥२९॥
दीर्घाङ्गुलिकःपुरुषो बहुयोषित् समागमः ।
इत्येवं पञ्चदीर्घानि प्रशस्तानि विचक्षणैः ॥ ३० ॥
सूक्ष्माण्यङ्गुलिपर्व्वाणि स्थिरचित्तं प्रकुर्व्वते ।
सूक्ष्माःकेशाश्चरोमाणि जनयन्ति सुभागिनम् ॥ ३१ ॥
सूक्ष्ममांसत्वचश्चापि दधते मृदु मानसम् ।
इत्येवं पञ्चसूक्ष्माणि निर्दिष्टानि पुरातनैः ॥ ३२ ॥
कक्षःकुक्षिश्च वक्षश्च नासा स्कन्धो ललाटिका ।
उन्नता वीर्य्यधान्यश्रीः सुहृच्छाक्तिसुखप्रदाः ॥ ३३ ॥
रक्तपाणिर्धनाढ्यःस्या द्रक्तपादश्च यानवान् ।
रक्तनेत्रःश्रिया युक्तो रक्ततालुःसुभोजनः ॥ ३४ ॥
बहुमित्रो रक्तनखो रक्तजिह्वश्च बुद्धिमान् ।
रक्ताधरो यशस्वी स्यादित्येवं रक्तसप्तकम् ॥ ३५ ॥

इति पुरुषलक्षणम् ।

---

ललाटे दृश्यते यस्याः तिलकं कृष्णपिङ्गलम् ।
वज्राकृतिर्य्याविमला सा स्यादैश्वर्य्यभाजनम् ॥ ३६ ॥
वामे पयोधरे यस्याः हस्ते कर्णे गलेऽपि वा ।
मापकस्तिलको वापि सापि लोकेन पूज्यते ॥ ३७ ॥

---

१ स्थिर मित्रं ।

यस्याः सकूपौ हसने कपोलौ
सश्मश्रुकं वा यदि चोत्तरोष्ठम् ।
उत्पिण्डिका रोमवती च जङ्घा
सा दैवहीना कुलटापतिघ्निद् ॥ ३८ ॥
यस्याःकटङ्कारवती गतिश्च
होत्रीव भूमिं पदयोर्निधाने ।
हस्ताश्च पादाश्च भवन्ति शुष्काः
सा स्यादधन्या विनयोज्झिता च ॥ ३९ ॥
अनामिका या पदयोः प्रयाणे स्पृशेन्नभूमिं युवती सभूर्नि ।
निहत्य भर्तृद्वितयं क्रमेण तृतीयमासाद्य भवेत् स्थिरा सा४०
अङ्गुष्ठतो यच्चरणे सुदीर्घा प्रदेशिनी सा न पतिं रमेत ।
पार्श्वद्वये सुप्रकटा यदीये रोमावली सापि च भर्तृहीना॥४१॥
आहृत्तरोमाणि कृकाटिकायाः पृष्ठस्य सन्धौ प्रकटानि यस्याः ।
सा भोगहीना पतिविप्रयुक्ताः नाभौ तदा चेन्मुनिभिःप्रशस्ता॥४२॥
काकस्वरा सापि च काकजङ्घा निस्निग्धकेशाद्विजलोमयुक्ता ।
हस्ताङ्गुलीच्छिद्रपुटाञ्जलीश्च भर्तुर्विपत्ते भवनं हि शून्यम् ४३
उच्छूनयोनिर्द्रविणेन हीना नीचा च शुष्कस्मरमन्दिरा च ।
अश्वत्थपर्णोपमयोनिबिम्बा पीनोरुगण्डा च वधूःप्रशस्ता ॥४४॥
घुघुन्दरीगन्धनिधिस्तुयोनि नाभिः प्रशस्ता पटुभिःपुराणैः ।
आहृत्तकण्ठा पल्लवाग्ररेखा भवेद्विशेषेण पतिप्रिया सा ॥ ४५ ॥
लक्षणान्यवशेषाणि पुंल्लक्षणवदादिशेत् ।
अस्मिन्नतिशया दोषाः प्रोक्ताःप्रह्लादनोदिताः ॥ ४६ ॥
विपच्यते च यस्यार्थी मजङ्घं पदपृष्ठकम् ।
द्वितीये मासिपजानूनि तृतीये कटिगुह्यकम् ॥ ४७ ॥

---

१ हस्ताङ्गुलीछिद्रपुटाञ्जलीश्च ।

चतुर्थे सौदरौ हस्तौ सपृष्ठं हृदयं ततः ।
षष्ठे कण्ठःसकक्षास्यः सकपोलश्रुतिःपरम् ॥ ४८ ॥
अष्टमे घ्राणदन्तोष्ठाः नवमे भ्रूललाटिकाः ।
दशमे तु शिरःतत्तदङ्गकेषु च लोमजम् ॥ ४९ ॥
पाणियुग्मे च या रेखा पदयुग्मे च कीर्तिता ।
यानि लक्ष्मानि दुष्टश्च तत्तत्फलति सर्वदा ॥ ५० ॥
भूवारिवह्निवायूनां छायापीतारुणासिता ।
पाण्डरश्चेति तत्रान्ते न शुभे तु शुभे परे ॥ ५१ ॥

इत्याङ्गलक्षणादेशोनाम षोडशोऽध्यायः ।

---

## सप्तदशोऽध्यायः ।

---

मापकस्तिलकःस्यन्दः प्लोष्पश्चकण्डुतीत्यथ ।
प्रकाश्यन्ते समासेन पश्चोत्पाताःशरीरजाः ॥ १ ॥
गर्भोत्थितस्य तल्लक्ष्म प्रकृतं तदुदाहृतम् ।
प्रकृतन्यत्वमुत्पातः पश्येते प्रमुखास्ततः ॥ २ ॥
धनक्षयं वितनुते मापको दक्षिणे पदे ।
स्त्रीविप्रयोगं वामे तु जङ्घयोरर्थसम्पदौ ॥ ३ ॥
जान्वौ क्षेमारिष्टद्धिश्च सक्थ्यौ स्त्रीलाभविग्रहौ ।
वृषणे धनधान्ये च कोने कोशजयोजयौ ॥ ४ ॥
बन्धुवित्तविलोपौ च द्वयोर्लग्नस्याल्पयोः ।
सव्योदरे रिपुत्रासः श्रेयो वामोदरे भवेत् ॥ ५ ॥
स्तनयोर्धमित्राप्तिः पार्श्वयोःमरणामयौ ।
कक्षयोःशोकदैन्येच पृष्ठयोरश्रुपीडनम् ॥ ६ ॥

दक्षहस्तेऽर्थलोपश्च स्यानभ्रंशस्ततोऽन्यथा ।
प्रकोष्टयोर्जयलाभौ शोकहर्षौ तदूर्ध्वयोः ॥ ७ ॥
अंशयोःकीर्त्तिलाभौ च कण्ठे विग्रहनिग्रहौ ।
कृकाटिकायाश्चदक्षांशे शोको रोगो परांशके ॥ ८ ॥
चुबुके भीतिदारिद्रौ गण्डयोर्भोगदुर्यशः ।
अधरोष्टे मनस्तापं प्रियं स्यादुत्तरोधरे ॥ ९ ॥
नासिकापुटयोर्ज्ञातौ तापनिर्वेदकारिणी ।
दशोराधिममाधी च कर्णयोःप्रियविप्रयौ ॥ १० ॥
भ्रुवोःस्त्रीकलहक्षेपौ शङ्खयोर्विजयो द्वयोः ।
ललाटे व्याधिदारिद्रौ मूर्ध्नि श्रीविभवौ क्रमात् ॥ ११ ॥

इतिमापकोत्पातादेशः ।

---

दक्षपादतले जातस्तिलकस्तनयापहः ।
वामे निहन्ति वनितां कुरुते च सुहृत्क्षयम् ॥ १२ ॥
असितो वा सितोवापि पीतो वा रक्त एव वा ।
पुष्परूपो नखेष्वङ्कः स उत्पात उदाहृतः ॥ १३ ॥
रक्तासितावधिफलौ पीतश्वेता तु मध्यमौ ।
दक्षिणे चरणाङ्गुष्टे कलङ्को वित्तलोपकृत् ॥ १४ ॥
द्वितीये विग्रहं माद्गु स्तृतीयं मानसामयम् ॥
चतुर्थे प्रियमाचष्टे पञ्चमे पुत्रसम्पदम् ॥ १५ ॥
यथोक्तविपरीतेन वामपादे फलं वदेत् ।
पादयोर्विपरीतेन फलं करनखेषु च ॥ १६ ॥
पीडां पितुश्च मातुश्च पादयोःपृष्ठजां वदेत् ।
जङ्घयोर्व्यसनानन्दौ सक्थोरग्निभयं द्वयोः ॥ १७ ॥

---

१ धधिफलौ । २ करणकेषु । ३ रग्निभयोदयो ।

गुह्ये राजभयं माहुर्जघने स्थानविच्युतिम् ।
उदरे कीर्तिनिर्वेदौ पार्श्वयोर्व्यसनामयौ ॥ १८ ॥
स्तनयोःप्रीतिशोकौ च वक्षसि प्रियसङ्गमः ।
कक्षयोरर्थलाभञ्च दासहानिञ्च निर्दिशेत् ॥ १९ ॥
पृष्ठयोश्चौरभीतिञ्च लाभःस्याद्वाहनस्य च ॥
हस्तयुग्मोदरे वस्तुहानिर्बन्धुसमागमः ॥ २० ॥
तयोरेव च पृष्ठे तु श्रियश्च विपदं वदेत् ।
मित्रलाभश्च पुत्राप्ति भुभयोर्हस्तदण्डयोः ॥ २१ ॥
कृकाटिकायां क्षेमं स्यात् कण्ठे यात्रा विधीयते ।
गण्डयोर्मिष्टलाभश्च लब्धहानिश्च निश्चयात् ॥ २२ ॥
चुबुके वाष्पपर्य्यन्तं शोकमेवं विनिर्दिशेत् ।
नासिकायां वपुर्वाहु दृशोरप्रियदर्शनम् ॥ २३ ॥
कर्णयोःप्रीतिवाक्यश्च बन्धुनाशश्च निर्दिशेत् ।
ललाटे राजसम्मानमुत्तमाङ्गे धनागमम् ॥ २४ ॥
यावदुत्पातविलयस्तावदेव फलोदयः ।
ददूरुणिक्रिमिरेखायाः गोपमार्गोऽप्यदः फलम् ॥ २५ ॥

इति तिलकादेशः ॥



स्पन्दते दक्षिणाङ्गस्य फलं वक्ष्ये यथाक्रमम् ।
यथोक्तविपरीतेन वामाङ्गस्पन्दने फलम् ॥ २६ ॥
पृथिवीलाभमाचष्टे शिरसि स्पन्दने ध्रुवम् ।
ललाटे स्थानवृद्धिः स्याच्छिल्यां[1] प्रियसमागमः ॥ २७ ॥
भ्रूक्षे[2] व्यवसनलाभश्च श्रवणे श्रवणप्रियम् ।
दृशान्ते वस्तुलाभः स्यादुन्मूले मानसी व्यथा ॥ २८ ॥

१ भ्रौह । २ स्यांचिल्यं ।

केचिद् व्याचक्षते दृष्टे रथःप्रियसमागमम् ।
नेत्रान्ते धनलाभश्च उन्मूले भ्रूससंशमम् ॥ २९ ॥
लोचनस्योपरिस्पन्दौ मानसीश्च रुजं जगुः ।
कपोले विप्रयोगश्च चिबुके मधुरासनम् ॥ ३० ॥
अधरोष्ठे रिपुध्वंसो मित्राप्तिश्चोत्तराधरे ।
नासिकायां सुगन्धाप्तिर्गले च विजयो भवेत् ॥ ३१ ॥
अंसे च भोगवृद्धिश्च बहाविष्टेन सङ्गमः ।
मणिबन्धे यशोलाभो हस्ते द्रविणसम्भवः ॥ ३२ ॥
पृष्ठे पराजयो वक्षस्युदयो चोदरेषु च ।
स्तने त्वपूर्वं स्त्रीलाभं पार्श्वमोनिम्नुत्तरा ॥ ३३ ॥
जठरे शोकवृद्धिश्च नाभौ स्थानादिह च्युतिः ।
कट्यामाश्रितसम्मोदः कोशे कोशविवर्द्धनम् ॥ ३४ ॥
मुष्के तनयलाभश्च जघने वनितागमः ।
वस्तौ कुटुम्बवृद्धिश्च दोषःस्यादुरुपृष्ठतः ॥ ३५ ॥
ऊरुपौरस्त्यभागे तु मित्रता सचिवैःसह ।
जानुन्यरातिसन्धानमथवा गमनं ध्रुवम् ॥ ३६ ॥
जङ्घायाःस्थानलब्धिश्च पादपृष्ठे तु विग्रहः ।
प्रयाणं भयसंयुक्तं स्यन्दने चरणोदरे ॥ ३७ ॥

इति स्पन्दनादेशः ॥

मूर्द्धा ललाटस्य तटीभुजौच वक्षश्च हस्तांघ्रितलानि चैवम् ।
भ्रूभ्रूणमुख्यावयवानि वै ते प्लोषोल्वणाःखेदकरा नराणाम्॥३८॥
दृशो कपोलावधरौ गलश्च कुक्षिश्च कोशो जघनञ्च पायुः ।
एकादशैतेऽवयवाःजलादयाःप्लोषोत्तरास्तोपकरा नराणाम् ३९

१ मानसीश्च । २ जयोलाभो । ३ स्युदयोदयेस्तुच । ४ द्रेसस्या ।
५ ... ।

पृष्ठे च पार्श्वविथ सक्थिनी च जङ्घे च मुष्के च ककाटिका च ।
अग्निमभूतावयवा दर्शिते प्लोषोत्तरास्तापकरा नराणाम् ॥४०॥
नासाश्रुतिर्नाभिसुमस्तकश्च कक्षद्वयं विंशतिरङ्गुलीनाम् ।
वायुस्तरास्तु त्रिघनांशकास्ते प्लोषोत्तरा बन्धुसमागमाय॥४१॥
शेषाश्च सर्व्वे तनुसन्धयश्च विद्धिन्नतो भूतमयो मदिष्टः ।
प्लोषोत्तरास्ते जनयन्ति कोशं न भूजले सोद्भवसन्धयस्तु॥४२॥

इति प्लोषादेशः ।

आनाभितस्तमःश्लिष्टमाकण्ठात् सत्वसंयुक्तम् ।
आमूर्द्धतो रजोयुक्तं देहस्त्रिगुणवानिति ॥ ४३ ॥
अकस्मादेव कण्डूतिरुत्पातः समुदाहृतः ।
रजस्सत्वतमःकण्डूः प्रीतिसौर्य्यक्षयमदः ॥ ४४ ॥
पुंसक्रमोऽयं निर्दिष्टः सःस्त्रियोविपरीततः ।
पश्चोत्पाताःक्रमादेते विलोमेन बलोत्तराः ॥ ४५ ॥
त्रयोपि पश्चिमोत्पाताः पक्षेण फलपाचकाः ।
चिरराम्भसत्तास्ते चिरेण फलदा मताः ॥ ४६ ॥

इति देहोत्पातादेशोनाम सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः ।

अतःपरं समासेन स्वप्नादेशो निरुप्यते ।
प्रयतोल्यं सकृद्भुत्वा प्रविशेद्देवतालयम् ॥ १ ॥
देवस्य पुरतो मन्त्रं साक्षतैःसर्षपैर्लिखेत् ।
पूर्णे कुम्भे सदग्धास्ते बलिना च समर्चयेत् ॥ २ ॥

१ भूमृत सुम्कायमया।निर्वैते ।

ॐ भिन्नमहाम्बोदरवासिने कालकालाय हुं हुं फट् फट् स्वाहा ।
अष्टोत्तरशतं जप्त्वा पीत्वा प्रसन्नं चाननम् ।
देवध्यानपरो मौनी हविष्येण शयीत च ॥ ३ ॥
पूर्वजन्मकृताभ्यासं स्वप्नरूपाणि कर्मणः ।
तदृणुत्थानीति व्यर्थं स्वप्नदृष्टं विनिर्दिशेत् ॥ ४ ॥
एव्याज्जन्मानि भोक्तव्यं मानःमनोविभ्रमात्मकम् ।
तदस्पृष्टमिति व्यर्थं स्वप्नं दृष्टं परित्यजेत् ॥ ५ ॥
दुर्बलप्रलपोक्तश्च स्वप्ने दृष्टो नु भुज्यते ।
तथ चिन्तामयं स्वप्नं सर्वदैव बुधस्त्यजेत् ॥ ६ ॥
इसाद्रिशृङ्गाद्यधिरोहणञ्च यानाधिकःपश्यतिभिन्नपात्रम् ।
पित्ताधिकःकाञ्चनरक्तमाल्यादिवाकरादिज्वलनां न पश्येत्॥७॥
श्लेष्माधिकां रौप्यसितप्रसूनसरित्सरोम्भोनिधिलङ्घनानि ।
त्रिस्थूणमूर्त्तिस्तु यथोक्तरूपः स्वप्ने विमिश्रान् रजनीषु पश्येत्॥८॥
धीभन्नमत्ताभिभवोभिचाराद् द्विषादभुद्गुह्यगजं प्रदिष्टम् ।
एतानि सर्व्वाणि हि वर्ज्जयित्वा स्वप्नं भवेदिष्टमुरप्रदिष्टम् ॥ ९ ॥
प्रसन्नवद्भवति यत् स्फुरतीव चान्तस्स्वप्नस्य तस्य नियमासदृक्फलाप्तिः
स्वप्नाःशुभाशुभवशेन फलप्रदाये संक्षेपमात्रमिहता ननु वर्णयिष्ये१०

स्वप्ने प्रज्वलितं भवेद्यदिगृहं स्वाङ्गं स्वकीयं तथा
सर्व्वं वा सह बन्धुभिश्च यदि वा राज्यं स वै प्राप्नुयात् ।
आश्लिष्यस्त्ववनीं समुद्रमथवा शङ्खं ध्वजं पर्व्वतं
गौरीं वायुमतीं सुरद्रुममसौभर्त्ता भुवो जायते ॥ ११ ॥
देहं निकृत्य शतशो विकिरन्ति यस्य यो वध्यते च निगडेन गले च पादे
मूर्त्तिश्च यस्य भवतीह पुरीषलिप्ता संप्राप्नुयाद् सुमहतीं पदवीं श्रियश्च

---

१ मधुर्भक्तं । २ इदकफाफय इदः । ३ संज्ञैःप्राप्नियात् ।
४ शाक्रध्वजम । ५ पर्वते । ६ निगलैर्गलेच ।

बिभर्ति यस्योपरि वारणो वा सितातपत्रं नृपतिर्द्विजो वा ।
ददाति गौरी यदि पुण्डरीकं दासोऽपि सः स्यादिह सार्वभौमः ॥ १३
अर्केन्दुगोशृङ्गविनिर्गतेन स्नानाभिषेको सलिलेन पाणौ ।
स्वप्ने गवां वा सुरदोहनश्च नृमूर्धहृन्मांसनिसेवनश्च ॥ १४ ॥

अन्त्रैश्चोदरनिर्गतैर्गिरिगृहग्रामादिसंवेष्टणं
कन्यायां परिरम्भने च सहसा स्वाङ्गप्रवेशोऽथवा ।
भुक्तिर्वा स्वसनश्च सिंहकरिणामारोहणं तेषु वा
प्रासश्चोदधिकाश्यपीक्षितिभृतां राज्यश्रियः सिद्धये ॥१५॥

तृणतरुकुसुमाम्बुमोद्भवे वा स्वनाभौ
दिनकरशशितारा भक्षणस्पर्शने वा ।
विदलति निजशीर्षे सप्त पञ्च त्रिधा वा
क्षितिगिरिपरिवर्तोन्मूलने वापि राज्यम् ॥१६॥

जये रणे वा व्यवहारवादे पुरीपभुक्तिर्भुवि विर्यस्य वीक्ष्य
अगम्यनारीगमनञ्च मृत्युः स्वशोतिभूरिद्रविणागमाय ॥१७

सितसुरभिमनोज्ञालेपमाल्याम्बराणाम्
सुरगुरुनृपगौरी ब्राह्मणानाञ्च दीक्षा ।
मणिरजतसुवर्णाम्भोजपात्रेषु भुक्ति
र्यदि दधिपरमान्नेशोणिते मज्जनश्च ॥ १८ ॥

सिततुरगफलध्वजातपत्रव्यजनसरोजमणिद्विपेन्द्रलाभाः ।
प्रभवजयवभुक्ष्वेतिशब्दाः परिमितराज्यफलप्रदा भवन्ति १९
मुद्राष्टशदाञ्जनी द्विपश्चश्री सन्नासिषु चाङ्गणाक्षिरुक्ता ।
लब्धे सरकेऽथदर्पणे वा भृङ्गारादिषु चोद्भवः सुतस्य ॥२०॥
क्रौमिन्धेधनलब्धिरम्बुनरणे शोकस्य नाशो भवे
द्वर्षारोदितशोचितादिषु तथा देहे विष्टद्धिर्मता ।

---

१ घजोघा । २ यस्यादि । ३ दिराद्यम । ४ मन्य
स्यसोनि । ६ मणिपेन्द्र । ७ प्रहारादिषु । ८ क्रैमिणोदन ।

गोन्द्रिद्विजदेवतापितृसुहृद्भूपाश्च ये सन्ति यत्
स्वप्ने तत्प्रियमाह्वचस्त्ववितथं प्रोक्तं शुभं वा शुभम् ॥२१॥
नाभिरन्यत्र गात्रे तृणतरुकुसुमे मौद्धवे स्नेहपानं
क्रीडायानोपभोगःखरकरभकपिद्ध्यालैरद्राश्च सत्वाः।
कायस्याल्पनं वा कलुषजलमपि गोपयःस्नेहपङ्के
र्दृग्जिह्वादन्तयाहुप्रपतनमथवानर्थशोकप्रदानि ॥ २२ ॥
गीतक्रीडितभूषितप्रहसितप्रेह्लोल्लितास्फोटना
न्यर्केन्दुद्विजतारकादिपतनं स्रोतस्यधोमज्जनम्।
रज्जुच्छेदचितामतापजननीगात्रप्रवेशादि वा
स्वप्ने कांशविचूर्णनञ्च शिरसि क्लेशामयानर्थदम् ॥ २३ ॥
श्मश्रुकेशगखर्दर्ष्णकल्पना वानरी विकृतनार्युपासनम्।
रक्तवस्त्रमनुजाङ्गमर्दनं रोगमृत्युभयशोकतापदम् ॥२४॥
स्थलमृगपशुकीटान्यूपचर्याण्डजानां
प्लवनमुदकरागौ स्याद्विवाहोत्सवा वा।
मरसिजजतुमाण्डक्रीडणं नर्तनं वा
मलिनविवसनत्वं चाश्रुशोकप्रदानि ॥ २५ ॥
पुंद्रव्यनाशे सुहृद्विप्रयोगे [1]भेदास्त्रमस्तरोजापहारे।
मासादहस्तादिवेश्मावतारः स्वप्नेषु नष्टो द्विजैःसम्प्रदिष्टः २६
मित्रस्याप्तिःस्याद्विकोपासिलाभेऽवश्यं राजा प्राप्नुयात्साधनाप्तौ
सर्पे कर्णं नासिकां वा प्रविष्टे तच्छेदःस्याद्विष्टेनैवास्य बन्धः॥२७॥
सर्पस्त्वहिभिर्वादष्टस्य स्वप्ने स्याद्यदि शोणितम्।
नरो वा यदि नारी वा पुत्रश्चार्थमवाप्नुयात् ॥ २८ ॥
तरुणं जीर्णमात्मानं[2]स्वप्नान्ते यस्तु पश्यति।
वृद्धिं तस्य विजानीयादारोग्यं चिरजीविनम् ॥ २९ ॥

---

१ मुदकरासो। २ भेदश्चपन्ता॥

यस्य तस्य गृहं शुक्लैर्दीपमैःसमलङ्कृतम् ।
नरो वा लभते नारीं नारी वा लभते पतिम् ॥ ३० ॥
काकं गृद्धं कपिं श्येनं गोधां वा सूकरं तथा ।
स्वप्नान्ते यदि यःपश्येद्व्यसनं तस्य निर्दिशेत् ॥ ३१ ॥
खर्ज्जूरनोच्चनकारोहः प्रशस्तः स्वप्नवेदिभिः ।
अन्यत्र स्पवल्वालमीकमहिषोष्ट्रखगादितः ॥ ३२ ॥
यद्यच्छ्वेतन्तु वर्णेन पूजितं सर्व्वमेव तत् ।
तक्रकर्पासभस्मास्थि भक्तं तत्र विवर्जयेत् ॥ ३३ ॥
कृष्णवर्णन्तु यद्द्रव्यं गर्हितं सर्व्वमेव तत् ।
अन्यत्र पर्व्वतान्भूमेः करिणःसलिलालयात् ॥ ३४ ॥
रक्तवर्णन्तु यद्द्रव्यं तत्सर्व्वं नःप्रशस्यते ।
अन्यत्र शोणितान्मांसात् प्रवालातपत्रचन्दनात् ॥ ३५ ॥

आद्ये वर्षाद्वत्सराद्वा द्वितीये
यामे पाको षण्मासाच्चतृतीये
मासात्पाकः शर्व्वरी पश्चिमांशे
सद्यःपाको गोविसर्गेषु दृष्टः ॥ ३६ ॥
दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात्
पश्चाद्दृष्टो यः स पापं विपचेत् ।
शस्तं श्रुयाद्यत्रसाधुद्विजेभ्यः
तेत्वाशीर्भिः पूजयेद्युक्तदुर्गैः ॥ ३७ ॥
भूयो वा स्वपनं न चास्य कथनं गङ्गाभिषेको जपः
शान्तिःस्वस्त्ययनं निमेवनविधिःमानर्गरास्पयोः ।
विप्राणाश्च निमन्त्रपानकुसुमैः पूजा यथाशक्तितः
पुण्यं दैवतकीर्त्तनञ्च कथितं दुःस्वप्नविध्वंसनम् ॥ ३८ ॥
इतिस्वप्नादेशोनामाष्टादशोऽध्यायः ।

---

१ भूयोमास्यमाणमवःस्व ।

## एकोनविंशोऽध्यायः

तिरश्चां चरितादेशं समासेनाथ वक्ष्यते ।
हस्त्यश्वकाकस्वानश्वे पेडाःप्राधन्यकल्पिताः ॥ १ ॥
वाल्मीकस्थानगुल्मक्षुपतरुमथनःस्वेच्छया भ्रष्टदृष्टि
र्यो यद्यत्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नम्यचोच्चैः ।
कक्षयासन्नाहकाले जनयति च महच्छीकरम्बृहतिर्भू
स्तत्कालं वा मदान्धोजयकृदपरदं वेष्टयन् दक्षिणाश्च ॥२॥
स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः
स्वशितमृदुमुर्दीर्घो न्यस्तहस्तःपृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलो विमोहः
भयकृदहितभक्षी नैकशोऽश्रुशकृच्च ॥ ३ ॥

इतिगजचारितादेशः ।

---

आरोहतिक्षितिपतौ विनयोपपन्नो
यात्रानुगोन्यतुरगः प्रतिहेषितश्च ।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
योश्वःसभर्तुरचिरात्मविणोति लक्ष्मीम् ॥ ४ ॥
मुहुर्मुहुर्मूत्रशकृत्करोति न ताड्यमानोऽप्यनुलोमयायी ।
सकार्य्यभीतोश्रुविलोचनश्च शिवंन भर्त्तुस्तुरगो विधत्ते॥५॥
वामैश्चपादैरहितोडयन्तो महीमवासाय भवन्ति पत्युः ।
सन्ध्यां सुदीप्तामवलोकयन्तो हेषन्ति चेद्बन्धुपराजयाय॥६॥

---

१ पेण्डाः ।  २ मो ॥

भस्मास्थिकेशपत्राणि विन्यसन् पतिवधाय शय्यायाम्।
मणिकुसुमाद्यवहनेन सुतस्य जन्माङ्गनायाश्च ॥ १८ ॥
पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः।
भयदो जनसंवासाद् यदि भाण्डान्यवनयेत् काकः ॥१९॥
वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम् ।
तत्पूजायां पूजाविष्टा करणेऽन्नसम्प्राप्तिः ॥ २० ॥
सद्द्रव्यमुपनयेत् तस्य लब्धिरपहरीतचेत् प्रणाशः स्यात् ।
पीतद्रव्यैकनकं वस्त्रं कार्पासिके सिते रूप्यम् ॥ २१ ॥
सक्षीराज्र्जुनवञ्जुलकूलद्वयपुलिनगा रुमन्तश्च ।
प्रावृषि वृष्टिं दुर्दिनमनृतास्नाताश्च पांशुजलैः ॥ २२ ॥
दारुणनादस्तरुकोटरोपगो वायो महाभयदः ।
सलिलमवलोक्य विरुवन् दृष्टिकरो वृष्टिरोधीर्वा ॥ २३ ॥
दीप्तोद्विग्नो विटपे विकुट्टयन्वह्निकृद्विततपक्षः ।
रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत् ॥ २४ ॥
ऐन्द्रीं दिशमवलोक्य सूर्याभिमुखो रुवन् गृहे गृहिणः ।
राजभयबन्धुकलहं करोति सद्यः पशुभयश्चैव ॥ २५ ॥
शान्तामैन्द्रीमवलोकयत् रौतिच राजपुरुषमित्राप्तिः ।
भवति [illegible] नगुडाशनाप्तिश्च ॥ २६ ॥
[illegible] मिवरधातुलाभश्च ।
[illegible] र्वैर्दाहयोगश्च ॥ २७ ॥
दधितैलपल्लभो [illegible] प्तिः ।
[illegible] २८ ॥

गोपुच्छस्थे वल्मीकगेऽथवादर्शनं भुजङ्गस्य ।
सद्यो ज्वरो महिषगे वाशति गुल्मे फलं स्वल्पम् ॥ ४१ ॥
कार्य्यस्य व्याघातस्तृणकूटधामगेऽम्बुसंस्थे वा ।
शुष्केऽग्निप्लुष्टेऽशनिहते च काके वधो रुवति ॥ ४२ ॥
कण्टकिमिश्रे सौम्ये सिद्धिःकार्य्यस्य भवति कलहश्च ।
कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः ॥ ४३ ॥
छिन्नाग्रेऽङ्गच्छेदः कलहःशुष्कद्रुमस्थिते ध्वाङ्क्षे ।
पुरतश्च पृष्ठतो वा गोमसंस्थे धनमाप्तिः ॥ ४४ ॥
मृतपुरुषाङ्गावयवस्थितो ऽग्रतो वाशको ऽतिमृत्युकरः ।
भग्नास्थिच चञ्चा यदि वाश्यते ऽस्थिभङ्गाय ॥ ४५ ॥
रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति ।
भुजगगजदंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमशः ॥ ४६ ॥
सितकुसुमाशुचि मांमाननेऽर्थसिद्धिर्य्यथेप्सिता यातुः ।
धुन्वन् पक्षाद्द्धीनेनेच विघ्नं मुहुः क्वणति ॥ ४७ ॥
यदि शृङ्खलां वरत्रां वल्लीं वा यदा वाश्यते बन्धः ।
पाषाणस्थेच भयं क्लिष्टापूर्व्वाग्विकयुतिश्च ॥ ४८ ॥
अन्योन्यभक्ष्यसंक्रामितानने तुष्टिरुत्तमा भवति ।
विज्ञेयःस्त्रीभालो दम्पत्योर्वाशतोर्युगपत् ॥ ४९ ॥
प्रमदाशिर उपगतपूर्णकुम्भसंस्थेनाङ्गनार्थसम्माप्तिः ।
घटकुट्टने सुतविपत् घटोपदहनेऽन्नसम्प्राप्तिः ॥ ५० ॥
स्कन्धावारादीनां निवेशसमये रुवंश्चलत्पक्षम् ।
सूचयतेऽन्यस्थानं निश्चलपक्षस्तु भयमात्रम् ॥ ५१ ॥
बन्धःसूकरसंस्थे पङ्काक्ते सूकरे द्विकेऽर्थाप्तिः ।

---

१ वाशति । २ धामगेम्बु । ३ रुवति । ४ तस्थे ।
५ मतोवासको मृतुकरः । ६ वशति । ७ वसति । ८ वाशते ।

क्षेमं खरोष्ट्रसंस्थे केचित् प्राहुः वधन्तु खरे ॥ ५२ ॥
वाहनलाभश्च गते वाशसनुयायिनि क्षतजपातः ।
अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः ॥ ५३ ॥
का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम् ।
कच इति चास्मप्रीसे क इति रुते स्निग्धमित्राप्तिः ॥५४॥
करइति कलहं कुरुकुरु च हर्षमथकटकटेऽतिदधिभक्तम् ।
केके विरुतं कुकुवा धनलाभं यायिनःप्राह ॥ ५५ ॥

काकद्वयस्यापि समानमेतद्
फलं विशेषेण पदाधिकेन ।
प्रारम्भकाले गमने प्रवेशे
परीक्षणीयं विदुषा तदेतद् ॥ ४६ ॥

## इति वायसचरितादेशः ।

———०००———

सूर्य्योदयेऽर्काभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः ।
एको यदा वा बहवःसमेताः शंसन्ति देशाधिपमन्यमाशु ॥५७॥
सूर्य्योन्मुखः श्वानलदिक्स्थितश्च चोरानलत्रासकरश्चिरेण ।
मध्याह्नकाले ऽनलमृत्युशंसी सशोणितःस्यात्कलहो ऽपराह्णे॥५८॥
भषन् दिनेशाभिमुखोऽस्तकाले कृषीवलानां भयमाशु धत्ते ।
प्रदोषकालेऽनिलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम् ॥५९॥
उदङ्मुखश्चापि निशार्द्धकाले द्विद व्यथां गोहरणञ्च शास्ति ।
निशावसाने शिवदिङ्मुखश्च कन्याभिदुष्टानलगर्भपातान्॥६०॥
उच्चैःस्वराःस्युः तृणकूटसंस्थाःप्रासादवेश्मोपरिगांस्थिता वा ।
वर्षासु वृष्टिं कथयन्ति तीव्रामन्यत्र मृत्युं दहनं रुजंच ॥६१॥

१ प्रासादवेश्मोत्तमसंस्थितश्च ।

माष्टद्काले ऽवग्रहेऽम्भो वगाहं मरात्यन्तरे चैकैश्चाप्यभीक्ष्णम् ।
आधुन्वन्तो वा पिबन्तश्च तोयं वृष्टिं कुर्व्वन्त्यन्तरे द्वादशाहात्६२
द्वारे शिरो न्यस्य बहिःशरीरं रोरूयते वा गृहिणीं विलोक्य ।
शोकप्रदःस्यादथमन्दिरान्तर्बहिर्मुखःशंसति बन्धकीं ताम् ॥६३॥
कुड्यमुत्किरति वेश्मनो यदा क्षेत्रकाननभयं तदा भवेत् ।
गोष्ठमुत्किरति गोग्रहं वदेद्धान्यलब्धिमपि धान्यभूमिषु ॥ ६४ ॥
एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद्गृहस्य ।
गोभिःसार्द्धं क्रीडमाणःसुभिक्षं क्षेमारोग्यं चाभिधत्ते मुदश्च॥६५॥
वामं जिघ्रेज्जानुविलागमाय स्त्रीभिःसाकं विग्रहो दक्षिणं चेत् ।
ऊरुं वामं चेन्द्रियार्थोपभोगाः दक्षं जिघ्रेदिष्टमित्रैर्विरोधः ॥६६॥
यातुः पादौजिघ्रेश्तचेद्यात्रां माहार्थाप्ति वाञ्छितां निश्चलस्य ।
स्थानस्थस्योपानहौ चोद्विजिघ्रेत् क्षिप्रं यात्रां सारमेयःकरोति॥६७॥
उभयोरपि घ्राणने हि वाह्वो विज्ञेयो रिपुचौरसम्प्रयोगः ।
अथ भस्मनि गोपयेत भक्षान् मांसास्थीनि च शीघ्रमग्निकोपः॥६८॥
ग्रामे भषित्वापि बहिःश्मशाने भषन्ति चेदुत्तमपुंविनाशः ।
पियासतश्चाभिमुखो विरौति यदा तदा श्वा निरुणद्धि यात्राम्६९
उकारवर्णेन रुतेऽर्थसिद्धिं रोकारवर्णेन च वामपार्श्वे ।
व्यासेपमौकाररुतेन विद्यान्निषेधकृत् सर्व्वरुतैश्च पश्चात् ॥७०॥
पङ्क्तेति वोच्चैश्चमुहुर्मुहुर्ये रुवन्ति दण्डैरिव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन ते शून्यतां मृत्युभयञ्च कुर्य्युः॥७१॥
प्रकाश्य दन्तान्यदि लेढि सृक्किणी तदाशनं मृष्टमुशन्ति तद्विदः ।
यदाननश्चावलिहेन्न सृक्किणी प्रवृत्तभोज्येऽपि तदान्नविघ्नकृत्॥७२॥
ग्रामस्य मध्ये यदि वा पुरस्य भषन्ति संहत्य मुहुर्मुहुर्ये ।
ते क्लेशमाख्यन्ति तदीश्वरस्य श्वारण्यसंस्थो मृगवाद्विचिन्त्यः॥७३॥

१ सर्व्वं । २ च । ३ संगत्य । ४ पातो ।

वृक्षोपगःक्रोशति तोयपातः स्यादिन्द्रकीले सचिवस्य पीडा।
वायो शृंहे सस्यभयं गृहान्तःपीडा पुरस्थैश्च च गोपुरस्थे ॥७४॥
भयञ्च शय्यासु तदीश्वराणां याने भयन्तो भयदाश्च पश्चात्।
अथापसव्या जनसन्निवेशे भयं भयन्तः कथयन्त्सारीणाम् ॥७५।
एकेन मासः दिवसेन वस्यान्मासत्रयेणापि च केन चोक्तः।
श्वभिःशृगालाः सहशःफलेन विशेषमेषामधुना मचक्ष्ये ॥७६॥
पूर्व्वोदीच्योः शिवा शस्ता शान्ता सर्व्वत्र पूजिता।
धूमितभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥ ७७ ॥
राजा कुमारो नेता च दूतःश्रेष्ठश्चरो द्विजः।
गजाध्यक्षश्च पूर्व्वाद्यः क्षत्रियाद्यश्चतुर्दिशः ॥ ७८ ॥
पुरं सैन्येऽपसव्या च कष्टा सूर्य्योन्मुखी शिवा।
अन्यमतिरुता याम्ये सोदरामृतशंसिनी ॥ ७९ ॥
वारुण्यभिरुता सैव शंसते सलिले मृतम्।
वाहीसग्निभयं शास्ति टाटेति मृतवेदिका।
धिग्धिग्दुष्कृतमाचष्टे सज्वाला देशनाशिनी ॥ ८० ॥
भेभेति भयमाचष्टे भोमो व्यापादमादिशेत्।
फल्गर्ग शपमानेन प्राणश्च परतो रुतम् ॥ ८१ ॥

इति श्वगोमायुचरितादेशः ॥

---

नसग्रचक्रं गृदगोल्किकायाः शस्तं रुतादेशविधौ रुतैः।
शुच्छुन्दरी शब्दविधौ च धाम्ने वृत्नानताने च गर्गोऽपि देशे ८
गोपालिकायाः स्वलु किलकिलाभिरुतं विनान्यानिरुद्दितं स्व
न्मानि सर्व्वाणि च सर्व्वदिक्षु नेष्टानि सिद्धानि गम्यतानि ॥८

१ अन्ति। २ याम्या। ३ चोरिक। ४ माद्दरमातीत्। ५ विनश्वा

फलन्ति तिर्यग् चरिते नगहेष
गृहाधिपस्याध्वनिचात्मनश्च ।
प्रभोश्च दुर्गे नृपतेश्च सैन्ये
सभास्वमात्यस्य धनान्त्रयाद्यैः ॥ ८४ ॥

इति तर्य्यगचरितादेशोनाम एकोनविंशोऽध्यायः ।

## विंशोऽध्यायः ।

अथाग्निदग्धं परिपृच्छतःस्फुटं शुभाशुभं प्रश्नविलग्नतो नृणाम् ।
ग्रहैःशरीरादिकभावसंस्थितैर्गताङ्गमायाखिलकार्य्यगोचरम् ॥१॥
संप्रेक्ष्यमाणस्त्ववसःशरीरी प्रसह्य दैवेन शुभाशुभेन ।
ज्योतिर्विदःसन्निधिमेति यस्मात् प्रश्नेऽर्थ्यतो जन्मसमाःफलेषु ॥२॥
सुखचरणगतावतीव रम्ये फलकुसुमद्रुमशालिनि प्रदेशे ।
जलवति घृतगोमयार्द्रफेणे भवति शुभं ध्रुवमेव पृच्छकस्य ॥३॥
मङ्गलद्रव्यानां दर्शनमाकर्णनं तथाहि लाभाः ।
पृष्टश्चादरयुक्तः सिद्धिमभीष्टस्य विदधाति ॥ ४ ॥
अङ्गुष्टकर्णवदनस्तनहस्तनामा
कण्ठांसपादतलगण्डशिरांसि गुह्यम् ।
ओष्टं वचःस्पृशति वक्ति शुभानि यद्वा
पृष्टा तदा कल्पति ध्रुवमर्थसिद्धिम् ॥ ५ ॥
प्रोक्ताधातुःश्रोणिजश्चोष्णरश्मि
मूलाख्याःस्युश्चन्द्रमस्सौम्यसौराः ।

प्यनेजन्मसमः ।

जीवोऽभिख्यो [1]दैत्यपूज्यो वरेढ्यो
यस्यांशे स्यादिन्दुजः सा तु योनिः ॥ ६ ॥

घातुर्मूलं भवति च तथा जीवदैत्येजराशौ
युग्मे वास्मिन् स्वयमपिच भवेदेतदेव प्रतीपम् ।
लग्ने योंऽशः स खलु सुधिया गण्य एवं क्रमात् स्यात् ।
संक्षेपोऽयं नियतमुदितो विस्तरात् तत्प्रभेदः ॥ ७ ॥

जन्मसमयार्थफलतो यात्राकालस्तिथिकरणबलवान् स्यात् ।
यात्राकालोक्ताश्च प्रश्नबलं दुर्ब्बलमुपन्ति ॥ ८ ॥

एषां तु फलविरोधे विमृश्य सम्यग् बलाबलान् स्वधिया ।
पौर्व्वापरयोः फलयोः याप्यत्वं वा फलैर्वाच्यम् ॥ ९ ॥

यात्रासमयाज्ञाने जन्माज्ञानेऽपि निर्दिशेद् प्रश्नात् ।
भावितफलं तज्ज्ञाने तदनुगमादेवं निर्देश्यम् ॥ १० ॥

अशुभे समुपनते सति अशुभो योगो शुभं निरां कुरुते ।
सुशुभे समुपनते सति सुशुभो योगो ऽशुभं कुरुते ॥ ११ ॥

[2]राशिर्विलग्नगो यस्तु तत्कालाच्छायया हतः ।
सप्तो धृतावशेषन्तु गुणकैर्गुणयेत्ततः ॥ १२ ॥

बाणप्रकृतिमन्वर्कद्विरदानलशूलिनः ।
सर्व्वपृच्छासु गुणकाः सूर्य्यादीनामनुक्रमात् ॥ १३ ॥

पुनःसप्तविभक्तेऽस्मिन् यदि सौम्योदयो भवेत् ।
प्रष्टुस्तदाकार्य्यसिद्धिर्नेतुः पापग्रहोदये ॥ १४ ॥

एकमष्टनिसंभक्ते शेषे तद्वर्गशोधिते ।
तच्छुद्धिमेति यद्वर्गकालं यद्गतो भवेत् ॥ १५ ॥

द्विनान्यकार्य्ययोः शेषे पक्षाः शुक्रादिमन्त्रिणोः ।
गुरोर्मासाःशनेर्वर्षान्दिनतः शशिजन्मनः ॥ १६ ॥

---

१ दैत्यपूज्यवरेढ्यौ । २ स्वात् । ३ वि । ४ ताथा । ५ विशा-
नयोगास्तु ।

शुद्धिश्चतुर्थभवनान्मदनान्निवृत्ति
लैग्राच्च्युतिः प्रसवनं दशमर्क्षतश्च ।
पृच्छाविलग्नसमये खचरैश्च वाच्यः
माप्तो ग्रहःहिबुकवेश्मनि तु प्रवासी ॥ १७ ॥
वृषतुलाघटकेशरिणःशुभैर्यदि भवन्ति नभःसुविलोकिताः ।
तनुभृतां कथयन्ति शुभं तथा वलभृतो यदि चोदयमिश्रिताः१८
नाशोनाथःपापदोर्हिनहानौ सन्देहःस्यान्नापिमृत्युश्च मृत्सौ ।
व्याधिर्यद्वा सम्भृतस्योपशान्तिःस्थानं माप्तेस्वेशुभे शूरणाख्यम्१९
कन्या मेषो वृश्चिकःकर्कटोवा मध्यं व्योम्नःसंश्रितःसौम्यदृष्टः ।
नष्टस्यार्थस्याशु नाशं विधत्ते रोगान् पृष्टःक्षिप्रमुत्थापयेच्च ॥२०॥
केन्द्रत्रिकोणोपगतैः शुभाख्यैःपापैस्तथा कण्टकरन्ध्रमुक्तैः ।
ब्रूयान्नराणामखिलार्थसिद्धिं विपर्य्ययाःस्यात्पुनरन्यथा तैः॥२१॥
शुभाश्चरायास्त्रिमदायखस्थे रवेक्षितास्ते शुभमङ्गणोर्थम् ।
पापं त्रिधर्म्मोदयरन्ध्रधीषु कार्य्यार्थहानिःशुभदाःशुभास्तु ॥२२॥
शुभाश्चरायास्त्रिधनेषु सिध्यै पापं पुनर्नेष्टफलं प्रदिष्टम् ।
नृराशयःकुम्भतुलानृयुग्मकन्याःशुभन्तेषु वदेद्विलग्ने ॥ २३ ॥
स्थानदाश्चरणभोगदाश्शुभाः लग्नधीधनयुजोर्थमानदः ।
नेष्टदाःस्युरशुभव्ययायगा लग्न इन्दुरशुभःसगोम्बरे ॥ २४ ॥
इन्दौ द्विपष्ठत्रिमदायखस्थे जीवे क्षिते स्याच्छुभमङ्गणोऽर्थम् ।
पापास्त्रिधर्म्मोदयरन्ध्रधीषु कार्य्याथहानिःशुभदाःशुभास्तु ॥२४॥
उदयगशशिनः सुतमाप्यते हिमरुचिर्यदि वा सचरोऽष्टमः ।
विजयभूरिधनाप्तिमिहादिशेत्पच शुभं पुनरत्र भविष्यति ॥ २६ ॥
सितरुचिं हिमगोरथवा सुतं यदि विलग्नगतं भृगुनन्दनः ।
समवलोकयति प्रियमुत्तमां श्रियममी लभते नियतं सदा ॥२७॥

---

१ च्युतिः । २ यर्य । ३ शुभमंणोक्षम । ४ हार्य ।

पीयूषांशौ पापयुक्ते सिते वा स्त्रीभिःसार्द्धं विग्रहःकीर्त्तनीयः ।
पापैर्यस्मान्मन्मथस्थानयाते स्वैरेवाम्बुस्थानगैर्वासवाच्यः ॥२८॥
उदये यदि क्षितिसुते भृगुजं प्रविलोकयेद्वनितायाःकलहम् ।
कथयेदथार्कतनयेस्य वदेद्यूने तथा सपदि गर्भहतिः ॥ २९ ॥
अरुणं विलोकयति केन्द्रगतस्तपनात्मजो भवति चौरभयम् ।
विपदङ्गणाभिरथवा कलहः सुमहान् प्रजायत इति प्रवदेत्॥३०॥
नाशोऽर्थस्य व्याधयो भीतिरुग्रा पश्यत्युष्णज्योतिसंभानुपुत्रः ।
लग्नस्थे वा पङ्कजानामधीशे निःसन्देहं वाच्यमेतत्त समग्रम्॥३१॥
मैत्रीकार्यं वृद्धिमर्थं जयं वा मित्रक्षेत्रे वीक्ष्यमाणः करोति ।
निःसन्देहं खेचरःपृच्छकस्य व्याचष्टे च प्रायशो नष्टलाभम्॥३२॥
गुरुसितौ यदि युग्ममधिष्ठितौ क्षितिसुतस्तु नभस्युदये बुधः ।
विजयराज्यधनानि यथास्थितिं नियतमेव तदा लभते नरः॥३३॥
यदि पृच्छतो भवति लग्नगतस्त्रिदशार्चितो दिनपतिर्दशमे ।
लभते तदाविजयराज्यधनान्यधिकान्यसौ निखिलमन्यदापि ३४
उदयास्तमयोः स्थितयोः शुभयोस्सहजाम्बरवर्तिभिरप्यशुभैः ।
प्रणमन्त्सरयो लभते च तथा बहुसारमथार्थचयं पुरुषः ॥ ३५ ॥
उद्यच्छन्तं यद्यनुष्णांशुमूर्तिं पापः पश्येन्मध्यवर्त्त्यम्बरस्य ।
स्थानभ्रंशं मृत्युमर्थप्रणाशं पुंसाकिवातं कमुग्रं विधत्ते ॥ ३६ ॥
पृष्ठोदये स्याद्यदिधर्म्मसंस्थः पापो भवेदात्मजसंस्थितो वा ।
नाशस्तमक्षिप्रमिहास्ति नूनं मितोपसर्प्येति वदेत् तदाशु ॥३७॥
द्वादशे यदि भवन्ति विलग्नाल्लाभधाम्नि यदि वा सुरसौम्याः ।
कार्यघातमखिलार्थविनाशं भ्रंशमस्य वितरन्ति तदानीम्॥३८॥
हिबुकगःकुरुते धनसंक्षयं धनगतो विदधाति च बन्धनम् ।
रुजामिह्व करोत्यशुभग्रहो व्ययविलग्नगतो मरणं नृणाम् ॥३९॥

---

१ स्यादवदेद्युवते । २ निखिलमित्यादपि । ३ प्रिणांन्त ॥

दिनकरोभयमर्कसुतो रुजं क्षितिसुतो विदधात्यभिघातनम् ।
विकलतां मरणं यदि वा नृणामुशनसः कुरुते शशलाञ्छनः॥४०॥
पश्यत्येकश्चेच्छुभश्च स्वमुच्चं लग्नमार्त्तं खेचरं प्रश्नकाले ।
स्थानैश्वर्य्यार्थोच्चयो मानवृद्धिर्वाच्यः निःसन्देहमेवाततज्ज्ञैः ॥४१॥
यदि विलग्नगमुच्चगतग्रहः समवलोकयति ग्रहमुच्चगम् ।
भवति तत् समये समुपेयुषः सपदि राज्यमिति प्रवदेत्तदा ॥४२॥
आरोग्यस्य प्राप्तिमर्थस्य लाभं वादोज्जित्वं सङ्गमत्वं प्रियेण ।
सौम्याःकेन्द्रस्थायिनःखेचरेन्द्राःकुर्व्वन्त्यन्ये त्वन्यथा सर्व्वमेतत्४३

इति शुभाशुभादेशः ॥

---

पापैः सुतारातिगतैर्नभोगैर्निवर्त्तते मार्गत एव शत्रुः ।
चतुर्थवेश्मोपगतैःपुनस्तैः प्राप्तोऽप्यरातिर्भजते निवृत्तिम् ॥४४॥
क्षितिसुतो यदि वा रविनन्दनःसुखगतःकमलिन्यधिपोऽथवा ।
रिपुबलं न समेति तदाबुधः त्रिदशपूज्यसितैःपुनरन्यथा ॥४५॥
स्थिरगते शशभृत्युदये चरे भवति नागमनं विशतो यदा ।
नियतमागममस्य तदा वदेदिति [1]विपर्य्ययतस्तु विपर्य्ययः ॥४६॥
व्ययत्रिषष्ठद्विपदैकवर्त्तिनो भवन्ति लग्नादशुभग्रहाः यदि ।
तदा समागच्छति विद्विषाम्बलं चतुर्थराशौ न तदागमं विदुः ४७
स्थिरेमिश्रेऽथवा लग्ने शीतभानौ द्विसंश्रये ।
सुदूरमागतेप्यस्मिन्नरातिर्विनिवर्त्तते ॥ ४८ ॥
रिपुश्चरे चन्द्रमसि द्विसंश्रये विलग्नगे वार्द्धमितो निवर्त्तते ।
द्विधाभवत्यागमनं विर्य्यये पराजयःक्रूरविलोकिते पुनः ॥ ४९ ॥
चतुर्थवेश्मोपगतौ यदार्कमन्दौ तदाभ्येति न वैरिचक्रम् ।
इन्दुश्चयुक्तो हिबुके यदि स्यु स्तदाशु तस्यागममामनन्ति ॥५०॥

---

१ प्रागमणाभिपतौ। २ दितिमर्य्य यस्तु विमर्य्यय:।

मेषवाजिदृषककेशरिणश्चेल्लग्नगाःसुखगता यदि वा स्युः ।
खेचरैर्विरहिताःसहिता वा विद्विषो हि दधते विनिवर्त्तिम् ॥५१॥
स्थिरराशिगतो विलग्नगः शनिरिज्योऽथ तदा रिपुगःस्थिरः ।
उदयर्क्षगतामरार्तचश्चक्षरराशौ द्विपतस्तदागमः ॥ ५२ ॥
गुरुर्द्वितीये यदि वा तृतीये धाम्नि स्थितश्चेद्भृगुनन्दनो वा ।
क्षिप्रं तदायाति बलं रिपूणां तथा प्रवासी गृहमेति चाशु ॥५३॥

लग्नाद्राशौ चन्द्रमा यावति स्यात्
तावद्भिर्वा वासरैरागमो वै ।
लग्नस्येन्दोरन्तरे खेचरश्चेज्
जायेतान्यो नैव तद्वाच्यमेवम् ॥ ५४ ॥

इति सपत्नागमादेशः ।

---

अर्कार्किजज्ञासुरपूजितानां चरोदयस्थो यदि कश्चिदेकः ।
गमन्तदाक्षिप्रमुदाहरन्ति वक्रोपयातैर्विपरीतमेभिः ॥५५॥
चरविलग्नतःशशिजोऽथवा सुरगुरुस्तपनोऽथसितोऽथवा ।
गमनकृत्कथितो विनिवृत्तिदः पुनरसौ स्थिरलग्नगतःपथि॥५६
गमनागमने च पृच्छतः स्थिरलग्ने गुरुसौरिवीक्षिते ।
चरखेचरवीक्षिते पुनश्चचरलग्नेद्वयमाशु निर्दिशेत् ॥ ५७ ॥
स्थिरःसमग्रोत्तमवीर्ययुक्तो विलग्नगो वेश्मनि यत्र खेटः ।
तत्तुल्यसङ्ख्यामितैर्निवृत्ति रुक्तामयातुस्त्रियमेन मार्गे॥५८॥
काल एव विनिर्देश्यश्चरांशकगते ग्रहे ।
स्थिरेद्व्यात्मकभागस्थे क्रमाद्द्वित्रिगुणाः स्मृताः ॥ ५९ ॥
यदा यियासतो लग्ने स्मरस्थानपतिर्ग्रहः ।
वक्रं विधत्ते तत्कालमावर्त्तेरपरे जगुः ॥ ६० ॥

लग्नस्थिते सुरगुरौ षष्ठे वा शीतरोचिषि ।
दशमे वसुधाधाम्नि मप्तुः सिद्धिरनुत्तरा ॥ ६८ ॥
सिद्धिःस्याल्लग्नगे जीवे षष्ठे शुक्रेऽष्टमे रवौ ।
सचिवाप्तिर्गुरौ लाभे कर्म्मनिस्थार्कपुत्रयोः ॥ ६९ ॥
विदधाति शुभाय यासितांशुभखेचरलग्नसंस्थितैः ।
अशुभैरशुभं महर्षयः स्थिरलग्नेऽप्यशुभम्प्रचक्षते ॥ ७० ॥
भङ्गःशनीन्दुभौमेषु धर्म्मधीलग्नवर्त्तिषु ।
मृत्युःस्यादुदये भौमे द्रष्टयोश्चन्द्रमन्दयोः ॥ ७१ ॥
मृत्युं मृत्युगयोर्मन्दभौमयोर्लग्नगे रवौ ।
रवीन्दोस्तद्वदेवार्यं दुश्चिक्यनिधनस्थयोः ॥ ७२ ॥
मप्तुर्नाशं स्मरस्थैश्च रवीन्दुवसुधात्मजैः ।
क्षुन्मारश्चारिवृद्धिश्च विलग्ने भृगुभौमयोः ॥ ७३ ॥
लग्ने कुजेन्दोःषष्ठे च शशाङ्कसुतशुक्रयोः ।
वधःस्यान्मन्त्रिणःसूर्ये निधनस्थानवर्त्तिनि ॥ ७४ ॥
मप्तुःसुतवधःपापे विलग्नात्पञ्चमोपगैः ।
भङ्गःस्याल्लग्नगे भौमे सेन्दौ मन्दावलोकिते ॥ ७५ ॥

इति यात्रादेशः ।

———ooo———

दशमोदयस्मरगृहोपगाः शुभाः नगराधिपस्य विजयप्रदाःस्मृताः ।
नवमे जयाय गुरुशुक्रचन्द्रजाः कुजभानुजावपि च भङ्गदौ स्मृतौ७६
क्रूरे विलग्नोपगते तृतीये चन्द्रात्मजे तिग्मकरे चतुर्थे ।
युद्धं भवत्येव महीपतीनां पौरस्तु यस्तत्र विनाशमेति ॥ ७७ ॥
मनुष्यराशावुदये चरे च क्रूरौ भवेतां यदि खेचरेन्दौ ।
यातुर्नरस्याशु तदा विनाशं सौम्यग्रहेष्वेव सुयन्ति सिद्धिम्॥७८॥

१ मन्दाय ।

अनिमिपालिकुलीरघटे यदि स्थितिकृतोम्बुनिविद्विपकस्तदा ।
निगदितःस्फुटमेव पराजयः स्मृतमपक्रमणश्चतुराङ्गिभिः ॥८२॥
लग्ने लाभे कर्म्मणि द्वादशे वा यद्येकोऽपि स्याद्ग्रहःक्रूरसंज्ञः ।
यायी हन्यात्तत्पुरंसंयमीषु क्रूरो नस्यात्तस्य नाशं तदाहुः॥८३॥
लग्नतो ऽभिमुखतश्च खगेन्द्रो जायते दशमभे यदि पापः ।
हन्ति तन्नगरमाशु तदानीं विद्विपांनरपतिर्विजिगीषुः ॥ ८४ ॥
उदयतो यदि लाभगतो भृगुर्गुरुरथोष्णकरोऽथबुधोऽथवा ।
नगरभर्तुरसौ कुरुते तदा विजयमम्बरगस्तु परिक्षयम् ॥ ८५ ॥
उदयगैर्य्यदि वा स्मरवर्त्तिभे र्देशमराशिगतैरथवा शुभैः ।
विजय एव तदा पुरशासितुर्भवतियायिनृपस्य पराजयः ॥८६॥

इन्दोर्भानि नवादितो नवरवेरन्यानि चत्वारि भा
न्यब्जस्यैव तु पञ्चकं परमतो भानोरिमौ चन्द्रभे ।
स्यातां योऽत्र जयार्कभे स्थितजयःस्यान्योऽन्यभागस्थयोः
युद्ध्वा साम्यगतिस्त्वभे स्थितिजुषो नैवास्तियुद्धक्रिया८७
रैक्तयात्व जगतं सामर्गीते सार्द्धविवर्द्धिताम् ।
तामाग्नस्लो हृताहत्वा वर्गे स्वकदमादिषु ॥ ८८ ॥
केतुर्धूमश्च सिंहश्च वृषभश्च खरो गजः ।
काकश्चेतिक्रमाद्विद्यादेकाद्यैःशेषितैरिह ॥ ८९ ॥
काकाश्च खरधूर्म्यैह सिंहकेतुससिध्वजैः ।
उर्द्धोर्धवलिभिःशिष्टैर्वर्गैर्विद्याद्बलाबलम् ॥ ९० ॥
नवाधो द्विगुणास्त्रिघ्नः सर्वदीर्घाश्चकादयः ॥
सप्तावाग् द्विगुणाःसर्व्वे पूर्यन्तेऽपैसदृर्धतः ॥
हत्वा दिनानां शिष्टानां वैषम्याधिकतो जयः ॥ ९१ ॥
दुष्टा सूर्य्यस्थिता तारा ततस्त्रिविभागतः ।
दुष्टाःशुभाश्च विज्ञेया स्ताराःसाभिजितःक्रमात् ॥ ९२ ॥

---

१ चर्तमिषु । २ स्थिप्तुषोः । ३ सवंपुरस्तवधुर्म्यजम् । ४ मात्स्य-लोलुमा दुर्गादिव । ५ काकश्च ।

तारकाश्चन्द्रजन्मर्क्षाद् गङ्गातल नलाम्बुना ।
विभज्या द्विचतुः पट्टा दृष्टास्तारागणाःस्मृताः ॥ ९३ ॥
कण्टको विष्णुरब्जा च नेत्रं कारण्डकः शिवः ।
सारसश्च भगःकेकी सर्पो नन्दादिगा अमी ॥ ९४ ॥
माग्याम्याप्योचरान्तस्था कण्टकाद्यं क्रमादिमे ।
स्वतिथौ प्रथमोयामाश्रयोऽन्येपां परे क्रमात् ॥ ९५ ॥
आद्यबालकुमारराजवृद्धमृताश्च ते ।
तेषां क्रियागणोयानं बोधःसुप्तिर्मृतिःक्रमात् ॥ ९६ ॥
भोक्तुःस्थितैपुनर्भुक्ते क्रमादृषं शुभाशुभम् ।
त्रीण्यास्ये द्वौ दृशोःकण्ठे चत्वारि त्रीणि बाह्योः ॥९७॥
एकं द्विपार्श्वे चत्वारि पादयोर्भानि जन्मतः ।
रक्षेद् ज्यास्थितं गात्रं भायस्तन्नायुधम्पतेत् ॥ ९८ ।
श्येनमार्ज्जारसिंहश्च भुजङ्गाखुद्विपाःशशः ।
वले भागादि विन्यस्य वर्गाष्टकमिति क्रमात् ॥ ९९
यामार्द्धं सञ्चरन्त्वेते भागारम्भात्प्रदक्षिणम् ।
स्वपराद्यक्षरं ज्ञात्वा कालतर्ष्यादि विग्रहम् ।
मिथो बलाबलज्ञानाद् युक्तियुक्तो विधिःस्मृतः ॥१००
त्रयो दण्डास्त्रिशूलाग्रास्त्रिर्य्यगूपट्टदण्डसंयुताः ।
द्वौ द्वौद्विपार्श्वयोर्विन्दु मध्यदण्डस्त्रिशूलवान् ॥ १०१ ।
मूर्ध्नि मध्यमशूलाग्रे विन्यसेद्रानुतारकाम् ।
ततःसाभिजितस्तारा वामेनैव निवेशयेत् ॥ १०२ ॥
मध्यशूले त्रिजन्मर्क्षे पतितं मरणावहम् ।
क्षतिदं शेषशूलेषु तिर्य्यक्शम्य बलप्रदम् ।
जयावहः स्याद्विन्दुस्थं पश्चाच्छूलेषु भङ्गदम् ॥ १०३

इति विजयादेशः ।

---

१ भागः । २ त्रिपण । ३ शोः । ४ स्यात्मिन्नुस्याम ।

उदये नरराशिगाःशुभा यदि वायव्ययवार्सिनस्तदा ।
भवेदन्नृपसिद्धिमूर्ध्वतः द्विननुस्थैरशुभैश्चिरोचिताम् ॥१०४॥

सौम्याःसौम्यालोकिताः केन्द्रयाताः
पुंलग्नस्थाःमीतिमुत्पादयन्ति ।
पापाःपापैर्वीक्षिताः खेचरेन्द्राः
तेष्वेव स्युः तत्समुच्छन्ति हेते ॥ १०५ ॥

ददाति वित्तं विजयी यदि स्याद् क्रूरस्मरक्षेत्रगतःखगेन्द्रः ।
क्रूरे विलग्नोपगते कृतोऽपि क्षितीशयोर्भेदमुपैति सन्धिः॥१०६॥
सन्धानमापोक्लिमभाजिसौम्ये शुभेऽथ लग्ने शुभवीक्षिते च ।
विनैव सन्देहममुत्र योगे महीपतीनामिति कीर्त्तयन्ति ॥१०७॥

इति सन्धानादेशः ।

---

लग्नाद्द्वितीये यदि वाष्टमर्क्षे
पापापदम् बिभ्रति सप्तमे वा ।
तदा दिशेदाश्रयणीयनाशं
प्राणमयार्णं यदि वापि दद्यात् ॥१०८॥

अर्थच्छेदो वित्तगैस्तस्यपापैर्जामित्रस्थैर्विभ्रमं कीर्तयन्ति ।
रन्ध्रस्थानस्थायिभिःस्वव्यमृत्वं तस्मादेतद्वर्ज्जयेद्यत्नतोऽर्थी१०९
द्वितीयसप्ताष्टमगैर्विलग्नाच्छुभैर्भवत्साश्रयणीय एव ।
आरोग्यमर्थस्सुखसम्पदश्च मीतिस्त्ववाटेव तयोर्नृपस्तोः ॥११०

इत्याश्रयाणीयादेशः ।

---

अञ्जनायतनपञ्च दकाणे सर्पवेष्टिनननावय लग्ने ।
चन्द्रसौरसहितेऽथ विलग्ने बन्धनं नियतमनः कथयन्ति ॥१११॥

---

१ तदादिशेत् । २ अञ्जनायतनस्याद्दकाणे ।

गृद्धकोल्वेदनाभुजगेन्द्रवेष्टितो यदि भवन्ति दृकाणम् ।
क्रूरतां परिगते मिनरश्मौ रन्ध्रभाजि मरणं कथयन्ति ॥१२१॥
मरणमाशु करोत्यशुभैः कृता धुरधुराचतुरस्रमाधाष्टिताः ।
बल्युतैस्तु शुभैरवलोकिते शशिनि गात्रिभवां कुरुते रुजां॥१२२॥
सौम्यैर्दृष्टः सूनुरम्भोजबन्धोर्यंयराशिश्चारितोऽसौ हिनस्ति ।
[1]इतिक्रूरालोकितस्तस्य प्राणान् क्षिप्रं रोगी दैवरोगविनैव १२३

लग्ने लाभे पञ्चमे सप्तमर्क्षे
शत्री धर्म्मे कर्म्मभे विक्रमे च ।
सौम्यारोगञ्चाशु कुर्य्युर्निवृत्तिम्
पापाः पुंसः पञ्चतामानयन्ति ॥ १२४ ॥

यदा जन्मगतश्चन्द्रो भानुस्सप्तमराशिगः ।
पौष्णकालः सविज्ञेयस्तदा स्वासं परीक्षयेत् ॥ १२५ ॥
पादार्द्धदिनहोरात्राण्यके नाड्यास्ततोऽनिलाः ।
नाममारभियोज्ञेयः समासं जीवयेत् क्रमात् ॥ १२६ ॥
द्वित्रिचतुर्दिनादष्ट पट्चतुर्वत्सरस्तथा ।[2]
मौननात् तु सुखी नारी स्मरचौरसुरादिना ॥ १२७ ॥
त्रिवत्सरं पट् त्रिचतुरद्वयेकमासश्च जीवयेत् ।
तिथिकाष्टाशरद्वयेकं दिने जीवेत्ततोऽधिके ।
आयुः कल्पेष्वनुक्तेषु कल्प्यं त्रैराशिकं क्रमात् ॥१२८॥
वीक्ष्यानिमसः स्वच्छायां पश्येन्निर्मलमम्बरम् ।
स्वकछाया दृश्यते स्वेता पापघ्ना तमनुकारिणी ॥१२९॥
समेच्छिरो भुजाकण्डेदेहार्द्धघ्नीद्वयैविना ।
पट्त्रिकव्येकमासार्द्धदशपञ्चदिनान्मृतिः ॥ १३० ॥

---

१ हन्तिक्रूरालोकितस्तस्य तस्य प्राणान् क्षिप्रं रोगिणो रोगिणां वा । २ चतुर्वितसरान्तथा । ३ माणण्येक ।

काकारुणकपोतादिर्यमाराहति निर्भयम् ।
सलिले चक्रचापं वा यःपश्येन्न स जीवति ॥१३१॥
ऊर्ध्वार्द्धश्चक्षुपोभङ्गं मर्द्दे न्यत्र न दृश्यते ।
ज्योतिश्चेत्पट्त्रिके द्व्येकमासिकं तस्य जीवितम् ॥१३२॥
दर्पणे वा जले रूपं विकृतं यत्समीक्ष्यते ।
यस्याङ्गं शवगन्धं वा मासार्द्धं तस्य जीवितम् ॥ १३३ ॥
कर्णौष्ठौ चलितस्थाना यस्य वक्रा च नासिका ।
कृष्णजिह्वा चलो मेरुः पट्सप्ताहं स जीवति ॥ १३४ ॥
जिह्वाग्रं दृष्टपूर्व्वं यो न पश्येत् सःत्रिसप्तिकः ।
रुद्धश्रवाः कर्णघोषं नश्यवत्वाशु गच्छति ॥ १३५ ॥
द्विधाप्लुवे जले दीपशान्तोर्निर्गन्धतस्तथा ।
अङ्गुष्ठगुल्फयोर्मध्ये मणिवन्धध्वजादिषु ।
वायोरस्फुरणं मृत्युः मांशुवर्षाच पृष्ठतः ॥ १३६ ॥
द्विधा वा दृश्यते दीपो ज्वालायार्धस्तथापि वा ।
यस्यैव प्रतिभागः स्यात् तस्य मृत्युः पुरः स्थितः ॥१३७॥
पट्त्रयद्व्येकमासार्द्धमासपञ्चाहजीवितः ।
नष्टम्पूर्व्वादिदिक्ष्वन्नं छिद्रितं धूमसंकुलम् ॥ १३८ ॥
भाति विम्बं क्रमाद्भानो रायुर्ज्ञात्वैव चात्मनः ।
दानं क्षेत्रप्रवेशादिं कुर्य्यात्मकर्म्मधीधनः ॥ १३९ ॥

इति जीवोपद्रवादेशः ।

---

सितेन्दुयुक्तेषु नदीक्षिनेषु वा कुलीरगौ तौल्लिषु जायते नृणाम् ।
कुमारिकालाभ इतिमनसते परामराद्याः मयंम महर्षयः ।१४०।

---

१ मर्द्दन्यत्रानिर्द्दिश्यते ॥ २ द्रष्ट ॥ ३ लिङ्गाप्त्यं । त्रिदाऽस्थं ।
४ स्थिताः ॥

युग्मर्क्षगोदानवराजपूज्यः सुधामयूखो द्विपदाङ्गनांशः ।
वीर्य्यान्वितो लग्नमवेक्ष्यमाणो कुमारिकालाभकरःप्रदिष्टः १४१
लग्ने यदि स्याद्युवतिस्त्रिभागस्तत्रापि वा स्याद्यदि योषितांशः ।
दृष्टः सितेनामृतरोचिषा च भवेत्तदासौ वनिताप्तिकारी ॥१४२॥
जामित्रविचापगतो विधत्ते दृष्टःशशाङ्कः सुरपूजितेन ।
स्त्रीलाभमिष्टं सहितोऽथ पापैर्दृष्टोऽथवा तैस्तमसौ निहन्ति १४२
केन्द्रत्रिकोणोपगताःसमस्त शुभाश्च सौम्याःप्रविलोकयन्ति ।
यदा तदासौ लभते सरूपां जायां विरूपामपि पापधिष्ण्यैः१४४
स्त्रीराशिस्थग्रहा लग्ने स्थिरयोषिद्ग्रहांशकाः ।
पश्यन्तः कन्यकालाभकारिणःस्युरसंशयम् ॥ १४५ ॥
वरलाभोऽपि कन्यानामेवं स्यादितिसूरयः ।
परं नराङ्गद्रेष्काणैः पुमांसःपुंग्रहैरपि ॥ १४६ ॥
लग्नतोरिमदधीसहजायेष्विन्दुरर्कगुरुभूसुतदृष्टः ।
स्यात् करग्रहकरो वनितानां केन्द्रधर्म्मसुतभेष्वथ सौम्यः १४७

इति कन्यावरलाभादेशः ।

---

वृषकेसरिकन्यकालिनः सुतधामाश्रयिणो भवन्ति चेत् ।
२ उदयाच्छशिनो सितोऽथवा तनयाल्पत्वमुपैति पृच्छकः॥१४८॥
शुक्रार्केन्दुसोणिजे स्वांशकस्थे
लग्नस्थे चापसगे वा सुरेडये ।
मण्डुर्निःमन्देरमाहुस्तदानीं
स्वापत्यत्वं काश्यपाद्याःमुनीन्द्राः ॥ १४९ ॥
पुत्रस्थानाधीश्वरो यावता स्वां
कालेनाशाम्याप्नुयात् खेचरेन्द्रः ।

---

१ पक्षाद्यः । २ स्थिताः । ३ स्यात्करग्रहदो । ४ शुभसद्म । ५ मन्दो

तावानास्थिन् कीर्तितो गर्भवृत्तेः
कालःस्त्रीणां प्रश्नशास्त्रार्थविद्भिः ॥ १५० ॥

इति गर्भसंभवादेशः ।

लग्नार्कगुर्विन्दुभिरोजराशौ नरांशके सुप्रबले नृजन्म ।
सौम्यांशयुक्ते यदि कन्यकानां जन्म प्रदिष्टं मुनिभिःपुराणैः
विषमे जीवतिग्मांशू स्यातां पुरुषजन्मदौ ।
युग्मे सितेन्दुभौमार्काः कन्यकोत्पत्तिदायिनः ॥ १५२ ॥
विषमोपगते विलग्ननाथे रविपुत्रे सुतजन्म निर्दिशेत् ।
समवर्तिनि तत्र कन्यकानां प्रसवं गर्गमुखाःपुनर्विदुस्ते ॥

स्यात्पुंवर्गे लग्नगे वीर्ययुक्ते
सूतिः पुंसः पुंग्रहालोकिते च ।
युग्मेनार्घ्या स्त्रीग्रहालोकभाजी
श्रोपेते तु स्त्रीभवेद्गर्भयुक्ता ॥ १५४ ॥
सौम्योपेतः सौम्यदृष्टाष्टमर्क्षे
स्थायी नाथः पङ्कजानां यदि स्यात् ।
तस्माद्देशादन्यदेशे तदानीं
प्राप्तो वाच्यः प्रश्नकालेऽस्य तातः ॥ १५५ ॥

इति पुत्रस्त्रीजन्मादेशः ॥

———o———

चन्द्रार्कयोःस्मरगृहोपगतौ सितार्कौ
लग्नात् सुखाष्टमगतौ यदि वा भवेताम् ।
यद्वद्द्वितीयसहजोपगताविमौस्तां
स्यात्प्राप्तापि प्रबल एव तदाम्बुपातः ॥ १५६ ॥

१ धाता ।

जलराशिगते शुभग्रहे सितपक्षेऽथतृतीयकेन्द्रगे ।
जलराशिगतेऽथवाशशिन्युदयस्थे धुवमादिशेज्जलम्॥१५

पृच्छाकाले वित्तदुश्चिकायोश्चे
देकोराशिर्ज्ञायते तोयसंज्ञा ।
यद्वा तिष्ठेत्तत्र तोयग्रहश्चे
च्छिःसंदिग्धं तोयपातस्तदा स्यात् ॥ १५८ ॥

कुम्भमीनमकराःजलसंज्ञाः कर्किवृश्चिकतुलावृषचापाः ।
सिंहमेषमिथुनप्रमदाख्या राशयोनिगदितागतजलाख्याः॥१५

शुष्काःकुजार्करविजा भृगुनन्दनश्च
शीतद्युतिश्च कथितौ जलमश्रयौ द्वौ ।
स्यादाश्रयस्य यदतःशितरश्मिजन्मा-
तद्वत्तिश्च वचसामपरे यथोक्ताः ॥ १६० ॥

राशीश्वरोत्थे यदि विक्रमे वा शुभेन युक्तो गमने चरेण ।
तदा नदीपूरतरस्य मध्यविशे दिने स्यात् सलिलस्य पातः॥१६

जलवस्रजलेन संयुते पयसोर्वाग्पतनं विनिर्दिशेत् ।
उपरीरितमन्यथा पुनर्बहुतोयं जलसंश्रये विदुः ॥ १६२ ॥

सदाभृतो दिशि यज्ञभृतोऽपि वा मधुरवाग्गलिभुग्यदि वासते
समभिपृच्छति देहभृति ध्रुवं निपतनं सलिलस्य तदा दिशेत्१६

यदा भवने मार्तण्डेन्दुर्जलर्क्षे शुक्ले पक्षे लग्नगः केन्द्रगो वा ।
सौम्यैर्दृष्टो भूरितोयं विमुश्चत्स्वल्पं पापैश्चन्द्रवद्भार्गवोऽपि १६

शुभेक्षितःप्राप्यपि शीतरश्मिर्भृगोः सुतात् सप्तमराशिवर्ती ।
यद्वार्कपुत्रान्नवपञ्चमस्थः स्मरास्थितोवापि जलागमाय ॥१६६

नदीतीरे कूपे सरसिसरसे पल्वलतटे
समभ्यर्च्य ज्योतिर्विदमरनिदेशेऽपि हरति ।

---

१ जलसंश्रयेविदुः ।

यदा पृच्छेत् पृष्टा जललुलितपा निःस्पृशति वा
यदा सान्द्रं सद्यः प्रकिरति तदाम्भो जलधरः॥१६६॥
तोयासन्नस्तोपकार्योन्मुखो वा
पृष्टा चेत्स्याच्छंस प्रश्नोऽम्बुसंज्ञाम् ।
तोयार्थानां प्रश्नकाले श्रुतिर्वा
यस्मिन् वाच्यं तत्र निर्देश्यमम्भः ॥ १६७ ॥
भानोःशुद्धस्फुटे चन्द्रभागालोकमुपक्षिपेत् ।
मण्डलात्तं समुद्धृत्य शिष्टं वायुस्फुटं वदेत् ॥ १६८ ॥
यदेन्दुस्फुटतुल्योसौ तत्र जीवनराहवः ।
यदि च स्युस्तदालोके वातचक्रं विजृम्भते ॥ १६९ ॥
गतचैत्रादिकान्मासान् दिनीकृत्य तिथिं क्षिपेत् ।
ततो नीतिभृतांस्तारा: स्थितं भवति लिप्तिका ॥ १७० ॥
तत्र ग्रहाणां सर्व्वेषां क्षिपेच्छुद्धस्फुटानपि ।
अयं पिण्डस्फुटो नाम भानुस्थानादिमो भवेत् ॥ १७१ ॥
विशोध्य मण्डलात्तत्र स्थितं विद्युत्स्फुटो भवेत् ।
क्षिप्त्वात्र ग्रामचट्कं तत्र चक्रेण ताडयेत् ॥ १७२ ॥
ततश्चन्द्रस्फुटःशोध्यः शेषो मेघस्फुटो भवेत् ।
अस्मिन् पिण्डस्फुटादूने वृष्टिर्नास्तीति निर्दिशेत् ॥ १७३ ॥
वृष्टिरस्त्यधिके तत्र कुर्याद्विघटिकामयम् ।
ओजःसं चेद्दिवा वृष्टिः समश्चेन्निशि सम्भवेत् ॥ १७४ ॥
अथवा विकल्प्य पिण्डं पिण्डभोगेन भाजयेत् ।
लिप्तिका दिनतो लब्धं वृष्टिकालस्य निर्दिशेत् ॥ १७५ ॥
मासस्य मार्गशीर्षस्य शाक्ल्ये प्रथमा तिथे ।
पूर्वाषाढाभिनाडेनं मेघगर्भः पर्तास्वनाम ॥ १७६ ॥

१ स्थाता । २ नामवट्कम । ३ पूर्वाषाढा दिवसे ।

ऐन्द्री न स्पृश्य यत्रर्क्षे गर्भश्चन्द्रवशात्ततः ।
मण्डूकसङ्के दिवसे तत्रैव प्रसवो भवेत् ॥ १७७ ॥
सितपक्षभवःकृष्णे कृष्णपक्षभवःसिते ।
दिवाभवःक्षपायाश्च क्षपाजातो दिवा भवेत् ॥१७८॥
सन्ध्याजातश्च सन्ध्यायां पौरस्त्यः पश्चिमे भवेत् ।
एवं दिशश्च सुव्यस्तान्मरुतश्च प्रकीर्त्तितम् ॥ १७९ ॥
मार्गशीर्षादिमो गर्भो ज्ञेयो मन्दफलःसदा ।
तथा पौषसितोद्भूतो गर्भः सूते फलं मनाक् ॥ १८० ॥
पौषस्य कृष्णमारभ्य क्रमाद्गर्भःप्रतिष्ठितः ।
श्रवणस्य सितं प्राप्य श्रवेदाकार्त्तिकोदयः ॥१८१॥
पूर्व्वाषाढं गते भानौ जातो गर्भस्ततो रवेः ।
आर्द्रये प्रयाणात्प्रत्येकं त्रयोदशदिनश्रुतिः ॥ १८२ ॥
शुक्रोदयर्क्षात्प्रभृतिक्रमेण वृष्टिर्भवेद्द्वादशभेषु मध्यम् ।
षट्केतनः कष्टतमा ततोपि मासास्यते सा नवतारकेषु ॥१८३॥
स्निग्धावलक्षबहुलं परिवेशचक्रं सूचिक्षुरोपरचितं पटलं घनानाम् ।
शुद्धं प्रसन्नशशितारकमम्बरश्च काकाण्डमेचकमुपन्निशि वायुगर्भे८४
सन्ध्याशुभामत्स्यसुरेन्द्रचाप निर्घोषविद्युत्प्रतिसूर्य्ययुक्ता ।
नादाःप्रशस्ताःशिवशक्रसोम दिग्भागगानां मृगपक्षिणाञ्च ॥८५॥
पैत्रे भाद्रपदश्चान्द्रे वैश्वे सार्पे च वारुणे ।
आप्ये स्वातौ च रुद्रे च गर्भो बहुजलप्रदः ॥१८६॥
निहतस्त्रिभिरुत्पातैर्गर्भःक्षरति नूतनः ।
युक्तयोर्दृष्टयोःसौम्यैः शुभो गर्भोऽर्कचन्द्रयोः ॥ १८७ ॥

---

१ तस्पृश्ये । २ श्रवेत् । ३ प्रमेत् । ४ फलम्मनाक । ५ तत्रयोदशदिनभुतिः । ६ कशाम्बरश्च । ७ मुसन्ति सिवागर्भे ८ दिग्भागावलम्र मृगपक्षिणाञ्च ।

क्रूरग्रहसमायुक्ते चन्द्रे च द्वादशात्मनि ।
गर्भःप्रादुरभूद्योसौ क्रूरकाशनिमत्स्यदः ॥ १८८ ॥
गर्भकाले घनानाञ्चेदतिवेलं प्रवर्षणम् ।
गर्भध्वंसाय निर्दिष्टं गार्ग्येन मुनिना परम् ॥ १८९ ॥
विरसं वारिवैमल्यं दिशां चलनविक्रियाम् ।
गोनेत्राभं वियद्रेकरमितश्च घनागमे ॥ १९० ॥
मार्ज्जारानखरैर्भूयो विलिखन्ते भुवस्तलम् ।
बध्नन्तः शिशवःसेतुं सूचयन्ति घनागमम् ॥१९१ ॥
समलो मिश्रगन्धश्च लोहानां मत्स्यसम्प्लवः ।
गिरयोऽञ्जनचूर्णाभा वाष्पसंरुद्धकन्दराः ॥ १९२ ॥
परिवेशश्च शशिनः कुक्कुटेक्षणसन्निभः ।
दृक्षाग्रेक्षकलासश्च नभस्तल विलोकनम् ॥ १९३ ॥
गवामूर्ध्वं रविप्रेक्षा शशीव मधुसन्निभः ।
मतीन्दुश्च दिवारुद्रकोणे विद्युद्विजृम्भणम् ॥ १९४ ॥
व्यवायश्च भुजङ्गानामधिरोहश्च शाखिषु ।
छोदणश्च तृणाग्रेषु न चिराद्वृष्टिकारणम् ॥ १९५ ॥
पिपीलिकानां पण्डानामन्तरेण विमर्दनम् ।
स्थानादन्यत्र चलनं गवाश्च विविधप्लुतम् ॥ १९६ ॥
स्तनितश्च निशीथिन्यां दिवा मध्येत्र विद्युतः ।
दण्डवद्विद्युद्योतं पौरस्त्याच्चीनयो मरुत् ॥ १९७ ॥
पांशुस्नानं विहङ्गानां कृता या तपस्यतु ।
उदयास्तमयेमिन्द्वार्या सपरिवेशकौ ॥ १९८ ॥
मयूररुतापन्न प्रातस्समानवर्णा यदा ।
जपाकुसुमसङ्काशमूर्तिसूर्यश्च गन्धशालिनाः ।

---

१ निशिरो । २ विविधप्लुतम् ।

मन्मोर्भिमनथमकरन्दउपवराहमीनोपमाः
ममृतपुटमश्रया नियमदाश्च यक्कन्यपः ॥ १९९ ॥
पर्यन्तेषु सुधाशशाङ्कयवन्मामण्डेक्षनालिद्विपः
स्निग्धा नैकपुटासरञ्जनकणा सोपानविच्छेदिनः ।
माहेन्द्रे मभवा. मपान्सवरतः मानीश्च पश्चाद्रवा
ये ते वारिमुचस्सजन्ति नचिरादम्भः मभूतं भुवि ॥२००॥
शनैश्चराद्वा शुक्राद्वा चन्द्रःमाप्यपि सप्तमः ।
पञ्चमो नवमो वापि शनैर्वृष्टिकरो भवेत् ॥ २०१ ॥
ग्रहाणामुदये चास्ते सङ्गमेवाश्च सङ्क्रमे ।
अयनान्ते च पक्षान्ते मायो वर्षति वारिदः ॥ २०२ ॥
सङ्गमे शशिजशुक्रयोस्तथा देवदेवरिपुमन्त्रिणोरपि ।
जीवसोमसुतयोश्च सङ्गमे भूरि वारि दिशतीह वारिदः २०३

---

मृगकुम्भझषा श्रेष्ठा जलराशिषु मध्यमाः ।
कर्किकन्यातुलाः शेषा अधमाःपरिकीर्तिताः ॥ २०४ ॥
अवग्रहग्रहाःसूर्यसूर्यपुत्रमहीसुताः ।
जलदौ भृगुशीतांशू मध्यमावपरौ स्मृतौ ॥ २०५ ॥
आधाराधेययोः मैत्रे साम्भस्त्वं भूरि वारिणः ।
व्यत्यये जलशोषाय मिश्रता स्वल्पवारिणः ॥ २०६ ॥
चतुर्थो जलराशिश्चेत् स्याद्वा तत्र जलग्रहः ।
चन्द्रभार्गवयोस्तत्र दृष्टिर्वा जलहेतवे ॥ २०७ ॥
आस्यद्रुवकुक्षिकोशेषु मश्नोःस्पर्शो जलोदये ।
हृन्मूर्द्धनासिकावक्षः स्पर्शो मन्दजलाय च ॥
शेषाङ्गस्पर्शने विद्याज्जलाभावंविचक्षणः ॥ २०८ ॥

---

१ मङ्गले ॥ २ भूरिवारिणे ॥ ३ उपालावरिक्त ॥

कूपार्कदेवो नक्षत्रचक्रमालिख्य बुद्धिमान् ।
शुक्रेन्दुस्थानदृष्टिभ्यः जलस्थानं विनिर्दिशेत् ॥ २०९ ॥
पद्यम्बुरहिते देशे वेतसःपश्चिमे ततः ।
हस्तैस्त्रिभिर्जलं सार्द्धे पुरुषे दक्षिणा शिरा ॥ २१० ॥
जम्ब्वा उदकविपिर्हस्तैः शिरापूर्व्वा नरद्वये ।
मण्डूकःपुरुषे लोहगन्धिना[2] मृततो जलम् ॥ २११ ॥
जम्बुद्रुमस्य पूर्व्वेन चल्मीकश्चेत् समीपगः ।
तस्य दक्षिणपार्श्वेच सलिलपुरुषद्वये ॥ २१२ ॥
पश्चादुदुम्बरस्याम्भस्त्रिकरैःपुरुषद्वयैः ।
सार्द्धेऽथपुरुषे कृष्णसर्पश्चाश्मा च तादृशः ॥ २१३ ॥
नार्कोर्य्यमिनककुभस्ततोहस्तत्रये जलम् ।
पश्चात्त्रिभिर्नरैःसार्द्धं सिकतायास्तलादधः ॥ २१४ ॥
वल्मीकाचितीनर्गुण्ड्याः दक्षिणस्यास्त्रिभिःकरैः ।
सपादे पुरुषद्वन्द्वे सलिलं बहुशर्करम् ॥ २१५ ॥
बदर्य्या यदिपूर्व्वेण वल्मीकःपश्चिमे ततः ।
नरत्रयेन सलिलं श्वेता च गृहगोधिका ॥ २१६ ॥
बदरी सफला सा चेत्ततः स्यात्पश्चिमे जलम् ।
नरत्रये सपादे तु पुरुषे दुन्दुभिध्वनिः ॥ २१७ ॥
[3]उदुम्बरःसबिल्वश्चेत्ततो याम्ये करत्रये ।
[illegible] ॥ २१८ ॥
[illegible] पे ।
सपादे सलिलं याम्यां मूषिका पुरुषार्द्धतः ॥२१९॥
विभीतकस्य याम्येन काकुर्य्यदि समीपगः ।
ततःप्राच्यान्नरैःसार्धे सलिलं सरसम्बहु ॥ २२० ॥

---

१ भेमरैय्याः ॥ २ कूपनो ३ उदुम्बरश्च बिल्वश्चेत् ।

कोविदारस्य चैशान्या वाल्मीकःसकुशो यदि ।
तयोर्मध्ये जलं विद्यात् सहार्द्धे पुरुषद्वये ॥ २२१ ॥
वल्मीकनिचितात्सप्त पर्णात्प्राच्यामनन्तरम् ।
पञ्चभिः पुरुषैस्तोयं पाषाणं कुरुविन्दकः ॥ २२२ ॥
सर्व्वेषामेव वृक्षाणामुन्दुरोघस्थितो यदि ।
अधस्तात् सलिलं तस्य सार्धे नरचतुष्टये ॥ २२३ ॥
दक्षिणेन करञ्जस्य काकुस्तस्मात्करत्रये ।
याम्ये नरत्रये वारि कच्छपःपुरुषार्धतः ॥ २२४ ॥
उत्तरेण मधूकस्य वल्मीकं पश्चिमोत्तरे ।
हस्तान् पञ्चक हित्वा जलमध्याष्टपूरुषैः ॥ २२५ ॥
दक्षिणेन सदुर्व्वस्तु वल्मीकास्तिलकस्य चैव ।
ततःप्रतिच्या पुरुषैः पञ्चभिः पूर्व्वतःसिरा ॥ २२६ ॥
पश्चिमेन कदम्बस्य वल्मीको दक्षिणे ततः ।
हस्तत्रयं परित्यज्य षड्भिस्तु पुरुषैर्जलम् ॥२२७ ॥
तालो वा नारिकेलो वा वल्मीकोपचितस्ततः ।
पश्चात् षड्भिःकरैर्याम चतुर्भिःपुरुषैःसिरा ॥ २२८ ॥
दक्षिणेन कपीतस्य वल्मीकश्चेदुदग्दिशि ।
परित्यज्य करान् सप्त सलिलं पुरुषत्रये ॥ २२९ ॥
त्रिवृच्छ्रकरपार्दी च लक्ष्मणा नवमालिका ।
दन्ती च दृश्यते यत्र नृत्रये याम्यतो जलम् ॥२३०॥
अतृणा सतृणा भूमिः सतृणा निस्तृणाथवा ।
पादाहता वा निनदेद्धनं वा वारि सत्र तु ॥ २३१ ॥
खर्ज्जूरिविभिरप्का चेद् यत्र स्याज्जलवर्ज्जिते ।
तस्य पश्चिमभागेन सलिलम्पुरुषत्रये ॥ २३२ ॥

---

१ वल्मीकदिग्विभागस्य । २ ताम्याम । ३ मत्स्येन ।

स्निग्धाश्च या पादपगुल्मवल्यो निश्छिद्रपत्राश्च ततः सिरास्ति ।
पद्मे क्षुरोशीरयुतः सगुन्द्रा काशो कुशो वा नलिका नलो वा२३३
खर्ज्जूरजम्ब्वर्ज्जुनवेतसाःस्युः क्षीरान्विता वा द्रुमगुल्मवल्यः ।
यत्रोदूधनाभाः शुभपत्रनीलाः स्युर्नक्तमालाश्च ससिन्दुवाराः २३४
विभीतको वा मदयन्तिको वा यत्रास्ति तस्मिन् पुरुषत्रयेऽम्भः ।
स्यात् पर्व्वतस्योपरि पर्व्वतेऽन्यैः तत्राम्बुमूले पुरुषत्रये वा॥२३५॥
समीपजैःकाशकुशैश्च युक्ता नीलाच मृद्वत्र सशर्करा च ।
तस्यां प्रभूतं सुरसञ्च तोयं कृष्णाथवा यत्र च रक्तमृद्वा॥२३६॥

कूपःखलो निकेतस्य ग्रामस्य नगरस्य वा ।
ऐन्द्रे भर्तृविनाशाय वह्निकोणे ऽग्निभीतिदः ॥ २३७ ॥
नैर्ऋते बलविध्वंसी वायव्ये वह्नितापदः ।
द्वारवेधं परित्यज्य शेषदिक्षु शुभावहः ॥ २३८ ॥
हस्तामघानुराधा पुष्यधनिष्ठोत्तराणि रोहिण्यः ।
शतभिषजित्यारम्भे कूपानां शस्यते भगणः ॥ २३९ ॥
अञ्जनमुस्तौ शीरैः सराजकोशातकामलकचूर्णैः ।
कतकफलसमायुक्तै र्योगः कूपोदकं शुभयेत् ॥ २४० ।

इत्यधोजलादेशः ॥

———:o:———

होरागतो दिनकरःपरिपूर्णमूर्त्ति
र्दृष्टःसितेन यदि वा त्रिदशार्चितेन ।
नष्टस्य लब्धिमचिराद्विदधातिलाभ
स्थानोपगःप्रबलवीर्य्ययुतःशुभो वा ॥२४१॥
स्थिरे विलग्ने यदि वा स्थिरांशे
वर्गोत्तमे वापि विलग्नयाते ।

१ मल्या । २ सेवीर । ३ सगुन्द्रा । ४ ...स्मि

तत्रैव वाच्यं स्थिरमेवं नष्टं
द्रव्यं स्वकीयेन च तद्गृहीतम् ॥ २४२॥

निर्देश्यमादिमध्यान्ते विलग्नदृष्टैर्द्रेकाणैश्च ।
द्रव्यं द्वारोद्देशे मध्ये भवनावसाने च ॥ २४३ ॥

पूर्णे विधुर्यदि विलग्नगतः शुभो वा ।
मूर्द्धोदये भवति सौम्यविलोकितस्तु ।
नष्टस्य लाभमचिराद् कुरुते तदानीम्
लाभोपगोऽथ बलवान् न शुभेतरश्चेत् ॥ २४४ ॥

तोये वित्ते विक्रमे पञ्चमे वा षष्ठे वा स्यात् खेचरेन्द्रःशुभश्चेत् ।
नष्टं द्रव्यश्चाशु लब्धि तदानीं ब्रूयात्तस्यासन्नदेशे स्थितिश्च॥२४५॥

ब्रूयादेषा खेचरैः कण्टकस्थैः यद्वा लग्नाक्षीदमीपादभावे ।
मध्यादूर्ध्वैद्रेंशकैर्वा विलग्नाद्वाऽन्यस्मिन्नध्वतो योजनश्च२४६

द्रव्यमांशकतश्चौरान् द्रेष्काणैरादिशेत् सुधीः ।
तद्देशकालराशिभ्यो वंशजातिश्च लग्नतः ॥ २४७ ॥

मृगकुरङ्गक्षपाजितुमस्तथा शुभयुता न शुभेतरवीक्षिताः ।
मुषितमर्थचयं विचरन्त्यमी नियतमम्बरमध्यमधिष्ठिताः२४८॥

लग्नं मासाः मापयन्ति स्वकाष्टं मेषाद्याश्चेद्राशयःखेचरास्तु ।
सम्बध्यन्ते लग्नमस्याःस्वकीयं यातं यद्वा वामराधीश्वरा वा २४९

अर्कादंशे विच्युते खाद्विपादशेलैष्टं काङ्गानि मह्नयाक्रमेण ।
स्पर्शगव्यूतिश्चोमहस्ता वितस्तिर्यद्वाप्येवं कीर्त्तयेद्द्गुणानि २५०

द्रेष्काणः स्याद् यत्स्वरूपो विलग्ने
तस्याधीशः खेचरो वापि यारक् ।
वर्णे वर्षे वेष्टिते वा कृतौ वा

---

१ मयूगेतरः । २ तुरङ्ग । ३ कुङ्ग । ४ तस्यादंशः । ५ क्रमेषा ।

तुल्यःस्तेनस्तेन निर्देश्य एव ॥ २५१ ॥

## इति नष्टलाभादेशः ।



तत्कालिकस्फुटं लग्नं कूर्य्याल्लिप्तामयं बुधः ।
गोसिंहौ दशभिर्गुण्यावष्टाभिर्मिथुनाष्टमौ ॥ २५२ ॥
सप्तभिश्च तुलामेषौ मृगकन्यौ च पञ्चभिः ।
अनुक्ता राशयःसर्व्वे गुणनीयाः स्वसङ्ख्यया ॥ २५३ ॥
तत्र स्थितग्रहाणाञ्च गुणकारैर्विवर्द्धयेत् ।
जीवे दश कुजे चाष्टौ शुक्रे सप्त विनिर्दिशेत् ॥ २५४ ॥
रवौ शशिनि साम्ये च रविपुत्रे च पञ्चभिः ।
तदवस्तविमं राशिं सप्तभिर्गुणयेत्ततः ॥ २५५ ॥
नच देयाश्चरे लग्ने विशोध्याःद्विशरीरके ।
स्थिरेण देयाःनोशोध्या इति व्याचक्षते ऽपरे ॥ २५६ ॥
सम्प्रदायाद्वयं ब्रूमो लग्नद्रेष्काणनिर्णयम् ।
आदौ दद्यावसजेदन्त्ये मध्येनायं विधिःस्मृतः ॥२५७॥
तत्तद्विधनशेषेण तत्तन्नक्षत्रमादिशेत् ।
केचिन्निधनशेषेषु चराद्युक्तविधिं जगुः ॥ २५८ ॥
कलत्रपुत्रमित्रारिभ्रातॄणां स्थानसङ्ख्यया ।
एकोनराशयस्तत्र देयास्तत्तारकागमे ॥ २५९ ॥
तद्वस्तोदितं राशिं चतुर्धा विनिवेशयेत् ।
दशाष्टसप्तपञ्चघ्नास्ते भवन्ति यथाक्रमम् ।
नव देया विशोध्याश्च प्रत्येकं तत्र पूर्व्ववत् ॥ २६० ॥
वत्सरा ऋतवो मासाः पक्षौ चेति पृथक् पृथक् ।
ज्ञेयाः स्वमानशेषेण प्रथमेऽव्वैव राशिके ॥ ~
द्वितीये तिथ्यहोरात्रं तृतीये मण्डले भ---।

चतुर्थे जन्मघटिकस्ततो लग्नं प्रसाधयेत् ।
ततो ग्रहं परिज्ञाय नेयं दायदशाफलम् ॥ २६२ ॥
अजमकरतुलाकुलीरकन्यास्थितभगनाश्चतुरङ्गुलीषु पङ्क्त्या ।
इह गणयेदधिरूढवर्गराशौ प्रभृति भवे नवमर्क्षकं हि यावत्२६३
यामस्य पूर्व्वभागश्चेद् विलोमात्पश्चराशिषु ।
क्रमात् पश्चषु चान्तश्चेद् यामस्संप्रार्द्धतोऽपरे ॥ २६४ ॥
पादं द्विगुणितं लोकयुक्तछायाविशोधितम् ।
भाजकस्थेन शुद्धार्के भाजिते घटिकादयः ॥ २६५ ॥
तत्रार्कभुक्तिं निक्षिप्य लग्नभुक्तिं विशोधयेत् ।
अशोध्यनीलनीतिभ्यः क्रमेणाभ्यस्य भाजयेत् ॥ २६६ ॥
वर्त्तमानस्य लग्नस्य सिद्धभोगविलिप्तिभिः ।
लब्धं भागादिकं तच्च सवर्णांकस कोविदः ॥ २६७ ॥
अन्तकेन विभज्याप्तमृक्षशेषं चतुर्गुणम् ।
तेनैव भाजयित्वाथ लब्धं पादो विधीयते ॥ २६८ ॥
भूयोऽभ्यासवशादेतत् साधयेद्दैवचिन्तकः ।
भक्ष्याकारविकल्पाभ्यामूहस्तत्र विधीयताम् ॥ २६९ ॥

इति नष्टकादेशः ।

---ooo---

यदिकण्टकवर्त्तिनःशुभाःसूर्य्यादिवैकादशवेश्मगा विलग्नात् ।
धनवद्गृहमादिशेत्तदानीं द्वारं स्वदिशि ध्रुवं वदेद्विधिज्ञः॥२७०॥
यस्मिन् भागे वेश्मनः सन्ति सौम्याः
तत्तद्रूपं संश्रयस्तत्र वास्यम् ।

---

१ यान्तिकेषु । २ मताद्वैभोग्तरे । ३ हन्दवो । ४ स्वामतमी । ५ भवयाध्याय । ६ मुगमन्त्र । ७ द्वारस्थ ।

यस्मिन् पापाः खेचरास्तत्र भागे
शल्यस्योक्तः संश्रयः प्रश्नकाले ॥ २७१ ॥
धिष्ण्ये समग्रेऽप्युदये विलग्ने विनिर्गते चन्द्रमसापि शून्यः।
प्राप्तिर्निखातस्य भवं तदानीं कृतेऽपि यत्ने द्रविणस्य नैव ॥७२॥
दशमे हिबुकेऽथ पञ्चमे दुश्चिक्ये नवमे तथोदये।
यदि सन्ति शुभग्रहास्तदानीम् ध्रुवमत्र द्रविणन्न नश्यति दूरत२७३

इति निधानादेशः।

---

संकीर्णकादेशमिमं यथावद् गुरूपदेशेन नरो विदित्वा।
नरेन्द्रवांछ्यपमुपैति भूयः सर्व्वेण लोकेन च पूजितःस्याद२७४

इति संकीर्णादेशो नाम विंशोऽध्यायः।

---

इत्यनवमदर्शनस्थविरस्य कृतौ दैवज्ञकामधेन्वा
मादेशप्रकरणं नाम द्वितीयम्।

---

## एकविंशोऽध्यायः।

---

वशिष्ठपूर्व्वाःप्रथमे महर्षयो वितस्य मङ्गल्यविधानमूचिरे।
ततःसमादादभिसङ्गशंसनं प्रणीयते किञ्चिदिहोपयोगवत्[1]
याम्यायनं कुलीरादि मकराद्युत्तरायनम्।
शुभकर्म्म सुविज्ञेयमुत्तरायनमुत्तमम् ॥ २ ॥
शुभेन युक्ता करणेन तिथ्या चन्द्रेण योगेन दिनेन तारा।
ग्रहैर्नभिन्ना न युता च पापैरुत्पातशून्या च शुभेषु पूज्या ॥३॥

---

१ मतन्।

कृत्तिकादीनि चत्वारि बुधवारादिषु क्रमात् ।
भानि यान्यमृतं योगं शुभं सिद्धिस्वसाधकम् ॥ ४ ॥
भानौ भानुश्चन्द्रमाश्चन्द्रवारे भौमे दस्त्रं बोधने चानुराधः ।
जीवो जीवे रेवती शुक्रवारे रोहिण्यर्कौ सिद्धियोगो निसर्गात्५
मूलं हरिरुपान्त्यर्क्षं कृत्तिका च पुनर्व्वसुः ।
भाग्यः स्वातिश्च सिद्धत्वं भानुवारादिषु व्रजेत् ॥ ६ ॥
शुक्रे नन्दा बुधे भद्रा भूमिजे च जया तिथिः ।
शनौ रिक्ता गुरौ पूर्णा सिद्धियोगयुता भवेत् ॥ ७ ॥
सूरारवारयोर्नन्दा तिथिर्भद्रेन्दुशुक्रयोः ।
बुधे जया च रिक्तेज्ये शनौ पूर्णामृताह्वया ॥ ८ ॥
कदाचिदेकम्यवना हि वह्निमित्रान्त्यमूलाशततारकाणाम् ।
नन्दा च मन्दारदिनेशवारे चेद्योगमाप्ता स वराख्ययोगः ॥९॥

रवौ हरिश्चन्द्रदिने दिने भं
भौमे च मूलश्च भगं बुधेऽह्नि ।
उपान्त्यभं जीवदिने च शुक्रं
स्वातिस्तथार्कौ शिखिभं शुभं स्यात् ॥ १० ॥

शुक्रेज्यशुभचान्द्रीणामक्षीणेन्दोर्दिनं शुभम् ।
एतेषामेव षड्वर्गो दर्शनञ्च सदा शुभम् ॥ ११ ॥
ध्रुवनक्षत्रमुद्दिष्टं रोहिणी चोत्तरत्रयम् ।
अभिषेकपुरारम्भमभृतीन्यत्र कारयेत् ॥ १२ ॥
उग्राणि त्रीणि पूर्व्वाणि भरणी पैत्रकारकम् ।
विषाग्निशत्रुघातश्च शाठ्याद्यश्चात्र कारयेत् ॥ १३ ॥
अश्विनीहस्तपुष्याणि लघु तत्र विचारयेत् ।
शिल्पौषधविधानानि भूपालङ्कारकादिकम् ॥ १४ ॥

---

१ मूखे । २ द्वय ।

मृदुवर्गोऽनुराधा च चित्रापौष्णेन्दुभानि च ।
सुरसहितवस्त्राद्यं मित्रताञ्चात्र योजयेत् ॥ १५ ॥
विशाखा कृत्तिका चैव मृदुर्तीक्ष्णक्रिया हिता ।
श्रवणादित्रयं वायुरादिसं चरकर्म्मणि ॥ १६ ॥

कुर्य्याद्भवे शुभकरःस्थिरपौष्टिकानि
धर्म्मक्रिया द्विजहितानि च बालवाख्ये ।
सम्प्रीतिमित्रकरणानि च कौलवाख्ये
सौभाग्यसंशयपदानि च तैतिलाख्ये ॥ १७ ॥

ःपिवीजगृहाश्रयजागरजे वणिजे ध्रुवकार्य्यवणिग्युतानि ।
हि विष्टिकृतं विदधाति शुभं परघातविषादिषु सिद्धिकरम्१८
ार्य्यं पौष्टिकमौषधानि शकुनौ मूलानि मन्त्राणि वा
ोकार्य्याणि चतुष्पदे सुरगुरुंद्देशश्च राज्यानि च ।
ागि स्थावरजङ्गमानि हरणं दौर्भाग्यकर्म्माण्यतः
ऽस्तुघ्ने शुभदृष्टिपुष्टिकरणं माङ्गल्यसिद्धिक्रिया ॥ १९ ॥
ण्युत्तराणि श्रवणन्धनिष्ठा प्रजापतिस्तिष्यसराब्धिभानि ।
र्ध्वाननान्येषु विधेयमूर्ध्वरोहोचितं कार्य्यमशेषमाहुः ॥ २० ॥

चित्राश्विनी मृगशिरश्च पुनर्वसुश्च
ज्येष्ठान्त्यहस्त्युपवनान्युपमित्रभश्च ।
तीर्य्यङ्मुखान्युचितमत्र विभक्तिमित्र-
मस्थानमङ्गलकृपीक्रयविक्रयाद्यम् ॥ २१ ॥

मघा विशाखा भरणी च मूलं पूर्वत्रयम्पन्नगकृत्तिके च ।
अधोमुखं प्रोक्तमिदं प्रशस्तमधोमुखं कार्य्यमशेषमेव ॥२२॥

अजमकरतुलाभृत्कर्कटाःपार्श्ववक्त्रा
युवतिमिथुनमीनान्युन्मुखाः कौर्पिकश्च ।

१ सुरगुरुद्देश्य । २ ऊर्ध्वरोहोचितं । ३ कौर्पिकश्च

नरःशुनी मृतमत्तुष्टो यालथ ज्वरितो नृपः ।
भेपार्त्तःशुधितःकामी निद्रालुःरगिकःशशी ॥ ३० ॥
इति चन्द्रावस्था ।

अवस्था शशिनःषष्टिर्नक्षत्रे नाडिकावशात् ।
तत्र मेषादिसंज्ञाःस्युः पञ्चपञ्चकलाः क्रमात् ॥ ३१ ॥
स्थानभ्रष्टस्तपोगिण्यः परनारीरयःक्रमात् ।
गुरुर्नागाधिरूढश्च क्रियाःस्युर्मेषपञ्चके ॥ ३२ ॥
सिंहासनस्थितो राजा मन्त्रिभिः सहितःशशी ।
रिपुहारी च सेनानीर्गुणा वृषभपञ्चके ॥ ३३ ॥
प्राणहर्ता शिरश्छेत्ता पाणिपादनिकृन्तकः ।
बन्धको देवरोपीच दशा मिथुनपञ्चके ॥ ३४ ॥
राजा च देवाध्यायी च स्वापी धर्म्मस्थितःशशी ।
धर्म्मकर्त्ता च पञ्चैताः क्रियाःस्युः कर्कपञ्चके ॥ ३५ ॥
साध्वससम्भवश्चन्द्रो निधिजन्मातुरागतः ।
वाप्ययुक्तोवसञ्चारी क्रियाःस्युःसिंहपञ्चके ॥ ३६ ॥
ज्वरातः पतितस्थानादेशान्तरगतोऽलसः ।
दिशान्त्युचितवित्तञ्च गुणाःस्त्रीपञ्चके क्रमात् ॥ ३७ ॥
आस्थानस्थो भवेच्चन्द्रो मन्त्रिभिःसह मन्त्रयेत् ।
परराष्ट्रगतो द्वेषी गजहस्तौलिपञ्चके ॥ ३८ ॥
समन्त्री युद्धभीरुश्च भयार्त्तो विमभोजकः ।
कृशानुपतितश्चेति क्रियाःवृश्चिकपञ्चके ॥ ३९ ॥
क्षुधारसस्थश्चान्यत्र विचरन् नरमांसभुक् ।
कुदारसहितश्चन्द्रो गुणाःस्युःचापपञ्चके ॥ ४० ॥

१ यालार्यः । २ संज्ञायुः । ३ गुरोनाधिसाधिरूढश्च । ४ [illegible]
पित विस्तश्च । ५ ज्वरार्त्ता । ६ चोपा । ७ नारामांसभृक् ।

विवाहेविभ्रमश्चन्द्रः स्त्रीभिः क्रीडागतस्ततः ।
दूते रतो महाराजः दुःखी मकरपञ्चके ॥ ४१ ॥
शेते रिपुर्नृपःसेव्यः समित्रं क्षितिपस्ततः ।
ध्यानकं मुनिभिःसार्द्धं सजानिघटपञ्चके ॥ ४२ ॥
सुमृष्टानासनश्चन्द्रः प्रवासभयविह्वलः ।
दाता नृसविकलपस्थः क्रियाःस्युर्मीनपञ्चके ॥ ४३ ॥
एवं चन्द्रगुणास्तेषु शुभेषु शुभमाचरेत् ।
सर्व्वदोषाः विनश्यन्ति विशेषनाशनाविधौ ॥ ४४ ॥
प्रश्नकाले च चन्द्रोऽयं शुभो यदि शुभप्रदः ।
इत्येवं शशिनःपष्टिर्वृहस्पतिमते दशा ॥ ४५ ॥
नाडीचन्द्रःस्वोच्चे भवति च दीप्तःस्वस्थःस्वगृहे सुहृद्गृहे ।
मुदितःभानुःशुभवर्गस्थः शक्ता स्याद्व्यक्तरश्मिश्च ॥४६॥
विकलो रविलुप्तकरो ग्रहाभिभूतःप्रपीडितश्चैव ।
पादयुतश्चैव खलो नीचो भीतः समाख्यातः ॥४७॥
शाल्मल्ये कुङ्कुमान्नैस्त्रिकटुकसहितैर्दाधिकान्नैःकपित्थे
रक्तैर्भक्तैः कदम्बे घृतगुणसहितैः क्षीरभक्तैश्च निम्बे ॥
अश्वत्थे पीतभक्तैर्धृतविदलधनैर्नक्तमाले वटाख्ये
कृष्णान्नैःपूतिमांसैः प्रभृतिरविदिनादर्चयेदिक्षु नाथान् ॥४८॥
सीमन्तपुंसवननामविधानमौल
विद्योपनीतकृषिर्बीजलवाग्रहश्च ।
राजाभिषेकनववेश्मपुरप्रवेश
श्राद्धक्रियाःक्रतुभुजाम्प्रतिमाप्रतिष्ठा ॥ ४९ ॥
एतेषां सविता देवः प्रभायोगः प्रभास्ततः ।
ततःप्राह्णे च मध्याह्ने कर्त्तव्यः शुभकाङ्क्षिभिः ॥ ५० ॥

---

१ विस्वच्छः । २ तिकलपस्थः । ३ विलद्दसर्णैः ।

अङ्कुरार्प्पणमाधानं विवाहः शिशुभोजनम् ।
एतेषां चन्द्रमा देवः कर्त्तव्यस्तु ततो निशि ॥ ५१ ॥
पूर्व्वाह्णे वापराह्णे वा स्नानञ्च श्रुतिवेधनम् ।
केचिदाहुर्दिवारात्रावभिषेकविधिं विदुः ॥ ५२ ॥
यात्रावस्त्रचिकित्साद्यः दिवा रात्रौ च सम्मतः ।
तत्र तत्रोचितस्थाने न विशेषविधिर्य्यदि ॥ ५३ ॥
कन्यानां वरणे चैव तथा पुंसवनेऽपि च ।
सीमन्ते वालभुक्तौ च मूढशुक्रो न दोषकृत् ॥ ५४ ॥
मासि कृत्सेषु कार्य्येषु मूढत्वे जीवशुक्रयोः ।
नदोषकृच्चदामासलक्षणं वलवद्यतः ॥ ५५ ॥
मङ्गलानां हि सर्व्वेषामङ्कुरार्प्पणमादितः ।
विधेयं विधिवत्तस्मात्तदत्र प्रतिपद्यते ॥ ५६ ॥
अङ्कुरार्प्पणमिच्छन्ति मङ्गलप्रारम्भतःपुरा ।
तृतीये पञ्चमे वापि सप्तमे नवमेऽह्नि वा ॥ ५७ ॥

श्रेयो विधातुरनुकूलदिने शुभानां
वारेषु दोषरहितेषु शुभे विलग्ने ।
तारापतौ वलिनि पश्यति भार्गवोऽयं
बीजार्प्पणं मिलितवन्धुजनैर्विधेयम् ॥ ५८ ॥

अश्वत्थपत्रदुर्व्वाभिर्य्युक्तपादाः शरावकाः ।
विशुष्कगोशकृच्चूर्णसिकतापूरिताःशुभाः ॥ ५९ ॥

अध्मानशङ्खगहितासितभूरिभेरी
ध्यात्वा श्रियं भगवतीं भवने कृतार्घ्ये ।
क्षीरप्लुतानि च वपेत्तिलमासकादि-
बीजानि पूर्व्वकथितेषु शरावकेषु ॥ ६० ॥

---

१ कृतार्घं ।

पिपीलिकाद्यैरिह कीटजातैरुपद्रुता वा यदि नोपरूढा ।
शुष्काश्च ताम्राः कुटिला विरूपा बीजाङ्कुरा विघ्नभयं विदध्युः६१
शीतलाह्लादिना दीर्घपत्रपुत्रसमाकुलाः ।
अङ्कुराः सिद्धिदातारो भवन्ति कुटिलेतराः ॥ ६२ ॥
अभितःस्थापयेत्प्राज्ञः साक्षिणे भाविशर्म्मणः ।
तृणाङ्कुरधारावस्तु सर्व्वमङ्गलमण्डले ॥ ६३ ॥
इति सामान्यविधिर्नामएकविंशोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

—ooo—

अनभिज्ञातदेशस्य यपस्य न हि पुष्कलम् ।
अतःप्रवक्ष्ये संक्षेपाद्दोषनिश्चयलक्षणम् ॥ १ ॥
द्विदैवताद्यैरुडुभिः क्रमेण
चतुश्चतुर्भिर्मिहिरादिवाराः ।
एकैकशः सम्मिलिता भवन्ति
वियोगविद्वेषमृता मृताख्याः ॥ २ ॥
अर्कादिवाराश्शरवेदशैलनागेन्दुरामद्वितिथिप्रयुक्ताः ।
द्विदैवतान्साजपुरन्दरार्य्य सौरीज्यवह्निश्रयिणोविनाशः ३
वाराःशनिप्रभृतयःप्रतिलोमदस्रा
पौष्णादिभिः सहगतास्तु चतुश्चतुर्भिः ।
योगाःक्रमेण गदिताः स्थिरवर्द्धमान
वार्क्षयव्ययमतङ्गजमोपलानि ॥ ४ ॥
पीयूषशूलनामा च सिद्धिःकाकोऽथ मृत्युकः ।
उत्पातो लम्बकः कम्पो निश्च्छत्रश्च मुद्गरः ॥ ५ ॥

पत्र धीरगतः केतुर्भानोः काकादयस्तथा ।
पुनः कालस्य दग्धसमाननन्दशेन दर्शितः ।
षड्विंशति योगाः स्युः स्वनामसमानम् ॥ ६ ॥
भौमार्कशनयोर्मूल ध्वजहस्ता स्यादातःपरम् ।
क्रमेण नाग गजहस्ता स्पृक्कण्टक एव च ॥ ७ ॥
उत्पाता स्यादुक्तनामानलान्निविधानि षोडश ।
मम एव नक्षत्रा मध्ये पञ्च चतुर्दशम् ॥ ८ ॥
युधापिहितनामाभ्यमहाकण्टकदूषणम् ।
महाज्वनचतुर्विंशमष्टमर्क्षेनिभस्वपम् ॥ ९ ॥
श्रीरामाङ्गिरनाराचं सप्तमं नवमं भम् ।
स्यादि क्रमाद्पगनामिति दोषद्वयं भवेत् ॥ १० ॥
मण्डनं दशम षष्ठं विशर्क्षं शनितारकात् ।
एकादशं पञ्चमञ्च परिघो वक्रराहुत ॥ ११ ॥

अनीतवारा मिहिरादयस्ते
त्रिमह्गुणान्मण्डलतो विशोध्यः ।
तत्रान्तिमाद्या धनरूपमीनाः
काणा अनन्धा इतराश्च ताराः ॥ १२ ॥

सप्तमाद्यपश्चिमःसप्त सौम्ययाम्यश्च राजयः ।
समन्तात् कोष्टचक्रे स्याद् भगनःकार्त्तिकादिकः ॥ १३ ॥
ग्रहाःक्रूराःशुभावाथ यद्रेकायामवर्त्तिनः ।
तद्रेकाभिमुखी तारा महाशूलेति विश्रुताः ॥ १४ ॥
वृषसिंहालिकुम्भानामर्के पञ्चमभागगे ।
षडशीति मुखं नाम सभागःशुभकर्म्मनुत ॥ १५ ॥
श्रीमद्वसुबोधाचार्य्येण सन्दर्भोऽयं प्रकाशितः ।

---

१ यंत्रविया । २ यद्रेकायामवस्थितः।

सुविचार्य्य ततः कार्य्यमारभेत विचक्षणः ॥ १६ ॥
विशाखादित्रयं याम्यमशाङ्कः शङ्करो मया ।
तिथयः शैलवेदार्का निन्दिता रविवासरे ॥ १७ ॥
विशाखादिद्वयं वह्निराप्यादित्रितयं मया ।
तिथयश्चाङ्करुद्राख्याः नेष्टा वारे हिमत्विषः ॥ १८ ॥
विष्णुवारुणदेवेन्द्रवासवाजकपालिनः ।
शराद्रिछिद्रदिक्मह्वयाः तिथयो न शुभाः कुजे ॥ १९ ॥

वसुयमभयमूलान्स्वाजभैश्चान्द्रिवारः
तिथिभिरभिदिशाग्निद्रेर्ककैश्चावयोगः ।
जलधिशशिभगार्द्ररोहिणीभैर्युतो वा
तिथिभिर्ऋतुनवार्णाङ्कैर्युतो जीववारः ॥ २० ॥

पुष्यादिभत्रयं शुक्रो विशाखादिद्वयं विधिः ।
दिक्छिद्राद्रिद्विनागाख्याः स्युस्तिथयो न शुभाः सिते॥२१॥
आर्य्यमादित्रयं पूषा श्रवणाप्यपुनर्व्वसुः ।
तिथयः शैलनागाङ्करुद्राख्या न शनौ शुभाः ॥ २२ ॥

इत्यवयोगः ।

---

भानुभानुजभौमानां वारवर्गाश्च पापकाः ।
तेषां तु शुभदृष्टस्य भानोर्वारो न दुष्यते ॥ २३ ॥
[1]पड्वेदनागाङ्कदशाष्टभानुविकृद्ध्रभान्वब्धिकराह्वयाश्च ।
विदध्युरेतास्तिथयोऽग्निभीतिं क्रमेण मेषादिगते स्वरांशौ ॥२४॥
भान्वादिवारेषु कृशानुचित्राब्रह्मान्तकार्द्राश्रवणान्स्वयुक्ताः ।
बाणाक्षिपूर्णे चलकामपष्ठीभुजङ्गमाख्यास्तिथयो विषाख्याः॥२५॥

इति विषयोगः ।

---

१ वै । २ पड्येग ।

चतुर्थी नवमी चैव तथैवाथ चतुर्दशी ।
त्रीणि रिक्ता दिनान्येवं पक्षयोर्वर्ज्जयेद् बुधः ॥ २६ ॥
चतुर्नवचतुर्दश्यासचादिमध्यान्ततत्समा ः।
कलास्तत्कालिका रिक्ता भयदा प्राणहारिणी ॥२७॥

इति रिक्ता ।

———o———

तोयर्क्षमाद्यया युक्तमनुराधा द्वितीयया ।
त्र्युत्तराश्च तृतीयायां पञ्चम्यां [1]वह्निपैतृभे ॥ २८ ॥
सप्तम्यां हस्तमूले द्वे अष्टम्यां पूर्व्वभद्रभम् ।
दशम्यां रोहिणीञ्चैव द्वादश्यां [2]सूर्य्यतारका ॥ २९ ॥
विश्वदेवं त्रयोदश्यां वधनक्षत्रमिष्यते ।
शुभकर्मात्र कुर्व्वाणः षण्मासान्मृत्युमाप्नुयात् ॥ ३० ॥

इति वधयोगः ।

———o———

शून्ये रोहिणीदस्रभे द्वे विश्वे चित्रा कृत्तिका माधवे स्युः ।
मासे चादितिभे हि शून्यं स्यादाषाढे वा सम भाग्यभञ्च३१॥
पाढे श्रावणे शून्ययोगः शून्ये रेवसब्धिभे भाद्रपादे ।
त् पूर्व्वाभाद्रपादाश्विनेये मासे वोर्ज्जे कृत्तिका चन्द्रभञ्च३२
विशाखोत्तरभाद्रपादसहैव पौषे शिवभानुभे द्वे ।
तु मूलश्रवणे च शून्ये ज्येष्ठाभरण्यां च तपस्यमासे ॥३३॥

इति मासशून्यम् ॥

———o———

१ वह्निपैत्रभेः । २ सर्प्पतारका । ३ मन्यमाप्नुयात् ।

व्याघातःपरिघो वज्रं व्यतिपातोऽथ वैधृतिः ।
गण्डातिगण्डशूलानि विष्कम्भो नव पापिनः ॥ ४

इति पापनक्षत्रम् ।

———:o———

आर्द्राशको हस्तधनिष्ठयोश्च द्वितीयपादःशिवसर्पयो
उपान्त्यमाशोर्विषयोस्तृतीये मूले भरण्यां दिनमृत्यु

इति दिनमृत्युः ।

———o;———

चरेषु सप्तमं भानोः स्थिरराशिषु पञ्चमम् ।
उभयोर्नवमं भागं षडाशीति मुखं विदुः ॥ ४४ ॥

इति षडाशीतिमुखम् ।

———ooo———

रविस्थतर्क्षाद्दशमे च सप्तमे त्रिसप्तके पञ्चदशे च भे शशि
रविस्थितांशे न समांशकस्थितः करोति तापं कमलापतेरा
स्थिते भानुस्थभाचन्द्रे चतुर्थे धूमकेतुकः ।
परिधिस्त्रवमे धिष्ण्ये षड्विंशे व्यतिपातकः ॥ ४६ ॥

इति सप्तसूर्यदोषः ।

———:o o o·———

स्फुटे विनिक्षिपद्भानोर्नागहेमधनम्बुधः ।
चन्द्रे सूरसमिद्वह्निर्भौमे धनुरसायनम् ॥ ४७ ॥
बौधे शालदयशाक्रे शौक्रे रोगक्षयाश्रयम् ।
[illegible]मान्दे राहौज्ञानशुभाभयम् ॥ ४८ ॥

विशुद्धमण्डलादेते चन्द्रस्फुटसमा यदि ।
रश्मिदोषांश्च यांस्तेषु शुभकर्म्माणि नाचरेत् ॥ ४९ ॥

इति रश्मिदोषः ।

—१—o—

वामेऽक्षिण मृगशीर्षञ्च दक्षिणेऽक्षणि ह्रुद्रभम् ।
पृच्छे च मूलं मत्स्यस्य लिखेदन्यानि पार्श्वयोः ॥ ५० ॥
अन्योन्याभिमुखर्क्षस्थौ यदि भानुनिशाकरौ ।
तन्नक्षत्रयुगं वेधो न तत्र शुभमाचरेत् ॥ ५१ ॥
त्रिंशत्त्रिंशत्कला भानोः सङ्क्रान्तावभितस्त्यजेत् ।
पञ्च पञ्च दिनान्येव जीवेन्मूढे समन्ततः ॥ ५२ ॥
चिरं मुद्यति चेच्छुक्रः सप्तभान्यभितस्त्यजेत् ।
गुरोः सप्तमराशिस्थस्त्वाजः शुक्रस्तु मूढवत् ॥ ५३ ॥
त्रिशिखं पूर्व्वतः शूलं त्रयं पश्चात्त्रिदण्डकम् ।
लिखेन्द्रोकाष्टकान्तीर्य्यक् तत्र भानुस्थकारकम् ॥ ५४ ॥
मध्यमस्य त्रिशूलस्य मध्येऽन्यस्याथ सव्यतः ।
गणयेंश्च शूलस्यास्तारा नेष्टा पराःशुभाः ॥ ५५ ॥

इति सूर्य्यशूलम् ।

—ooo—

अर्द्धचन्द्राकृतिं कृत्वा तत्र कोष्ठञ्च मध्यमे ।
त्रिशूलं त्रिशिखं तेषां मध्यःपार्श्वद्वये ततः ॥ ५६ ॥
त्रींस्त्रीन् बिन्दुन् विलिख्यात्र मध्यशूलस्य मध्यमे ।
न्यस्यार्कास्थितभं सव्याद् गणं शूलगतं सजेत् ॥ ५७ ॥

इति चन्द्रशूलम् ।

—o—

१ नव ।

नक्षत्रनाडिकातुल्यतिथिर्यत्र समागता ।
तद्दिनं दग्धकार्य्याख्यं न तत्र शुभमाचरेत् ॥ ५८ ॥
रवीन्दुस्फुटयोगार्धं चतुर्द्धां तत्र निक्षिपेत् ।
प्रियं दानं जयं दीपं नवभिस्तानि भाजयेत् ॥
यद्येकमपि शून्यं स्याद्वर्ज्जनीयं हि तद्दिनम् ॥ ५९ ॥

इति चतुर्दोषः ।

———०००———

रवीन्दुस्फुटयोगार्धं सप्तधा विनिवेशयेत् ।
मानं चापं धनं रूपं दानं देयं नेयानीति ॥ ६० ॥
संयोज्य सारसम्भक्ते शून्यं यदि विवर्ज्जयेत् ।
एकमप्यत्र शून्यं चेत्तत्र शुभमाचरेत् ॥ ६१ ॥

इति सप्तदोषः ।

———०००———

ताराग्रहस्य चैकस्य विभक्ते भवनद्वये ।
तिष्ठतश्चन्द्रसूर्य्यौ चेद्व्यतिपातःसराशिजः ॥ ६२ ॥
स्फुटे कमलिनीबन्धौ नीङ्गजन्मधनं क्षिपेत् ।
धूमस्फुटःसविक्षेयः समचक्राद्विशोधितः ॥ ६३ ॥
व्यतिपातो भवेत् सोऽपि नागलोकसमायुतः ।
परिवेश्यो भवेद्येपः पुनश्चक्राद्विशोधितः ॥ ६४ ॥
भवेदिन्द्रधनुस्तत्र निक्षिपेन्नगतोटकम् ।
सकेतुर्नागपुत्राङ्कं क्षिपेन्निर्घातको मतः ॥ ६५ ॥
सैचनागकुलैर्य्युक्तं परिघः परिकीर्त्तितः ।
नागलोकयुतः सोऽपि वांज्ञादण्डोऽभ्युदोरितः ॥ ६६ ॥

इत्यष्टमदोषः ।

———०००———

१ नयानीति । २ पय । ३ जीवात्तदण्डो ।

सच ज्ञानघनायुक्तः प्रथमोऽर्कस्फुटो भवेत् ।
चन्द्रस्फुटसमा एते चाष्टौ दोषाय कल्पिताः ॥ ६७ ॥
भौमाच्छोध्या भवेयुश्चेत् सिंहस्याष्टादशांशकाः ।
तद्युक्ततारकं रक्तस्फुटाख्यं न शुभावहम् ॥ ६८ ॥
तत्तद्वारे समारभ्य भुञ्जीत क्रमशो ग्रहाः ।
कलाश्चतस्रःपादोनं प्रत्येकं प्रतिवासरम् ॥ ६९ ॥
तेषु सौम्यो गुरुःसौरी क्रमादर्द्धप्रहारकः ।
यमदण्डश्च गुलिकस्तेषां भुक्तिं विवर्ज्जयेत् ॥ ७० ॥

इत्यर्द्धप्रहारयमदण्डगुटिकाः ।

———ooo———

नमवरनगनैागी वायुकाया नगज्ञा
नरफलननगनारी दायरेखा नराणाम् ।
घटचटनटचाटी नीरवारानिरत्नं
नयनृपमयतोयं वैरिनागा इति स्युः ॥ ७१ ॥

सङ्ख्याकलानन्तुरगादिभानामितासु नाडीषु गतासु तत्र ।
कलाश्चतस्रो विषनामधेयाः कुर्य्याद्विपश्चात्र शुभं न कुर्य्यात् ॥ ७२

इति नक्षत्रविषघटिका ।

———ooo———

कन्याजमीनधनुषां प्रथमो भुजङ्गो
गोसिंहतौलिघटमध्यम एव गृद्धः ।
युग्मालिकर्किमकरान्त्यगतो वराह-
स्त्र्यंशान् वदन्ति विषमत्र शुभं न कुर्य्यात् ॥ ७३ ॥

इति लग्नविषघटिका ।

———ooo———

१ अश्विन-अश्विनम् । २ नारी । ३ कुट ।

विना द्वितीयां दशमीं पक्षयोरुभयोरपि ।
शुभाःस्युस्तिथयः सर्व्वाः पक्षच्छिद्राहया इति ॥ ७४ ॥

इति पक्षच्छिद्रः ।

---000---

यस्मिन्नास्त्यर्कसंक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पाहस्पती मासौ श्रुत्युक्तौ शुभवर्जितौ ॥ ७५ ॥

इति वर्ज्ज्यमासम् ।

---000---

पञ्चमे भवने सूर्य्याद्रश्मिकूपःप्रतिष्ठितः ।
तस्मिन्नाचरितं कर्म्म स्वामिनाशाय वर्त्तते ॥ ७६ ॥
रविन्दुयोगश्चक्रार्द्धं व्यतिपातोऽथ वैधृतिः ।
चक्रे तु मैत्रपर्य्यन्तं कथ्यते सर्प्पमस्तकम् ॥
ग्रहोऽस्तमेति यत्रर्क्षे तन्मासैः शुध्यति त्रिभिः ॥ ७७ ॥

इति रश्मिकूपः ।

---000---

घटिकाद्वयमृक्षान्ते मासान्ते च दिनत्रयम् ।
ग्रहणे सप्त चाहानि वर्णान्ते पक्षमुत्सजेत् ॥ ७८ ॥
दिग्दाहधूमपरिवेशशिवारुतादौ
सन्ध्याघनस्तनितविग्रहशक्रचापे ।
देवोत्सवादिषु च राजसृतौ हिमान्धे
नैवाचरन्ति शुभकर्म्मविधिं विधिज्ञाः ॥ ७९ ॥
जन्मार्क्षाद् दशमं कर्म्म षोडशं घातमादिशेत् ।
अष्टादशं समुदयं गर्भमेकोनविंशभम् ॥ ८०

---

१ हत्युक्तौ ।

त्रयोविंशञ्च वै नाशं पञ्चविंशञ्च मानमम् ।
एतानि परिवर्ज्जन्ते सर्व्वत्र शुभकर्म्मणि ॥ ८१ ॥
जन्मकर्म्माष्टमेषाणां मित्रमिन्दुर्न दोषकृत् ।
कृष्णादौ योजयेदेतत् सर्व्वं बहुगुणं सति ॥ ८२ ॥
दग्धमालिङ्गितं धूम्रं नक्षत्रं परिवर्ज्जयेत् ।
ग्रहविग्रहवक्रेभ्यः मुक्तःसन्मासतःशुभम् ॥ ८३ ॥

इत्यन्तदोषम् ।

———000———

धिषणाधिष्ठिताद्राशेः द्वादशं षष्ठमष्टमम् ।
भवनं शीतगे याते शकटः कैश्चिदिष्यते ॥ ८४ ॥
उच्यते शकटःकैश्चिज्जीवस्थानान्निशाकरे ।
दित्योद्यस्वसुहृत्क्षेत्रमष्टार्थारिव्ययर्क्षगे ॥ ८५ ॥

चन्द्रे गुरोररिवधौ व्ययराशियाते
जीवोपभुक्तनवभागसमांशकस्थे ।
योगो हि नाम शकटो धथवन्धदः स्यात्
पूर्णस्तदा तदशुभक्षयदश्च एव ॥ ८६ ॥

इति शकटयोगः ।

———o———

अवविषवधयोगाः वन्धनं कण्टकाख्यो
दिनस्मृतिशकटाख्यो ज्वालिका ज्वालिकाग्निः ।
कुहदिनगुलिकाख्या विष्टिसंक्रान्तिरिक्ता
दिनकरशशिशूला वन्धभा शून्यलग्नम् ॥ ८७ ॥
सर्प्पमूर्द्धा व्यतीपातो वैधृतिःसूर्य्यदूषणम् ।
हतयोगश्च नक्षत्रलग्नयोर्विषलिप्तिका ॥ ८८ ॥

१ मद्यार्थे । २ कुश ।

षड्विंशतिरिमे दोषाः दोषेषु वलवत्तराः ।
अवश्यं परिहर्तव्याः सर्व्वमङ्गलकर्म्मणि ॥ ८९ ॥

इति षड्विंशति दोषनाम ।

---

ये दोषास्तिथिनक्षत्रवारराशिग्रहोद्भवाः ।
ते जीवदृष्टाःक्षीयन्ते मुनिनामारसैन्यवत् ॥ ९० ॥
करणञ्च ततस्तारा तिथिहोरा ग्रहोदयः ।
ग्रहाश्चेति वलीपङ्क्त्या पादवृद्ध्या वलप्रदाः ॥ ९१ ।
स्ववर्गस्थाःवलाढ्याश्च शुभाःकेन्द्रत्रिकोणगाः ।
सम्पूर्णदर्शनाः सौम्याः दृष्टिदोषविनाशकाः ॥ ९२ ॥
दुर्व्वला वहवो दोषा वलिभिःकतिचिद् गुणैः ।
हन्यन्ते योजयेत्तस्मादल्पदोषगुणाधिकम् ॥ ९३ ॥
एषु सर्व्वेषु दोषेषु शुभकर्म्म नचाचरेत् ।
पराभिचारकर्म्मादौ दोषाः सर्व्वेऽपि सिद्धिदाः ॥ ९४ ।

इति दोषप्रवादः ।

---

इति दोषशुद्धिविधानं नाम द्वाविंशोऽध्यायः ।

---

## त्रयोविंशोऽध्यायः ।

---

अतःपरं गर्भदशाविधानं मर्णायते तत्र च गर्भदशीनाम् ।
आमेवनं पुंसवनं तथैव सीमन्तकर्म्माणि यथाक्रमेण ॥१॥

उपचये नरराशिसमाश्रिते
हरिणलक्ष्मणि सौम्यनिरीक्षिते ।

मृगदशाम्भोतमासमृतुस्रवं
किल भवेद् दिवि शास्त्रविदो विदुः ॥ २ ॥
चित्रादिसन्स्त्रविश्वेभ्यो नक्षत्रेषु त्रिषु त्रिषु ।
स्वमृत्युर्धननाशश्च दुःखं पतिवधः क्रमात् ॥ ३ ॥
अनुक्तास्तारकाःसर्व्वा योषितां प्रथमार्त्तवे ।
स्वभर्तृबन्धुमित्राणां मन्दा नन्दनहेतवः ॥ ४ ॥
ऋतुस्रावो यदि स्वापे भोगिनी कुलटागतौ ।
आसने सुखिनी नारी भर्तुर्मरणदा स्थिता ॥ ५ ॥
ऋतुरक्ते जपावर्णे पुत्रिणी धनिनी घने ।
असिते दुःखभाग्नारी धूम्रे भाग्यविवर्जिता ॥ ६ ॥
निम्बपत्रभुजङ्गत्वक्श्लेष्मातकदलान्वितः ।
वराङ्गं धूपयेन्नारी रजःपतनकाङ्क्षिणी ॥ ७ ॥
उपचयभवनेन्दौ जीवसौम्यप्रदृष्टे
स्वपति महिमहात्मा राजमित्रं कुजेन ।
रमयति कितवं सा भार्गवेन प्रदृष्टे
भृतकमिनसुतेन स्यात् समस्तैश्च वेश्या ॥ ८ ॥
हरिर्हस्तानुराधा च स्वातिः पौष्णा च वारुणा ।
त्रीण्युत्तराणि मूलश्च रोहिणी चोत्तमा स्मृता ॥ ९ ॥
चित्रादितीन्द्वास्तिष्यास्तुरगश्चेति मध्यमाः ।
जन्मत्रयममायुक्ताः शेषाःशेषे विनिन्दिताः ॥ १० ॥
अष्टमी पर्व्वरिक्ताभिर्वर्ज्जितास्तिथयः शुभाः ।
वारःश्रेष्ठःस्थिरःस्वामी युक्तः दृष्टःशुभप्रदः ॥ ११ ॥
शेषे प्रशस्ताः सौम्यानां वारवर्गौ दयोदयः ।
दशमात्मजयोः शुक्रश्चन्द्रो लग्ने बुधो धने ॥ १२ ॥

स्वांशकं वा स्वराशिं वा सितार्कौ यद्युपाश्रितौ ।
त्रिकोणस्थौ बली जीवो योगोऽयं परमो मतः ॥ १३ ॥
पुत्रार्थिनी पिबेत् क्षीरं श्रीमूलं शवटाङ्कुरम् ।
तद्रसन्नासिदद्याच्च नरस्त्रीपुष्टयोः क्रमात् ॥ १४ ॥
वसुधां न स्पृशेत्पद्भ्यां न स्थीयात्तद्दिने सदा ।
अश्नीयाद्दोषधे जीर्णे सक्षीरं घृतपेशलम् ॥ १५ ॥

स्त्रीणामृतुर्भवति षोडशवासराणि
तत्रादितस्तु परिहृत्य निशाश्चतस्रः ।
युग्मासु रात्रिषु नरं विषमासु पुत्री
मिच्छन्निषेवनविधिं विदधीत धीमान् ॥ १६ ॥

गर्भदोषहरं क्षीरे कतकास्तिपिवेद्वधूः ।
गर्भो न तिष्ठेद्यस्याःसा दग्धा वन्ध्यारजो लिहेत् ॥ १७ ॥
रक्तेऽधिके स्त्री पुरुषस्तु शुक्रे नपुंसकं श्रोणितशुक्लसाम्ये ।
यस्मादतः शुक्रविवृद्धिहेतोः कन्दर्पिकद्रव्यरसं निसेव्य ॥१८
स्रगन्धधूपाम्बरभूषिताङ्गो नाध्मानरूपः क्षुधितो न चापि ।
नारीमृतुस्नानविभूषिताङ्गीं पतिश्च सद्रामपुष्टारमेतः ॥१९॥

इति गर्भदानम् ।

---

मासे तृतीये शशिवृद्धिपक्षे तिथौ प्रशस्ते भकुले विशेषात् ।
चन्द्रेऽनुकूले कुजजीवभानुवारेषु सत्पुंसवनं विधेयम् ॥२०॥
सौम्ये मघाषाढकभाद्रपादपुष्येऽयमूलादिति विष्णुहस्ताः ।
बुधैस्तुलाष्टाधिकचापमीनामिदोदयाःपुंसवने प्रशस्ताः ॥२१॥
अष्टमस्थाःग्रहाःसर्वे नेष्टा पुंसवने बुधैः ।

---

१ मिच्छन्निषेकविधिं [illegible] पुके

रविमन्दकुजाक्रान्तं मृगाङ्कं सप्तमं त्यजेत्।
विवाहयात्रामासादकार्य्ये पुंसवनेऽपि च ॥ २२ ॥
कुष्टी लग्नगते रवौ क्षितिसुते स्यात् पित्तरोगान्वितो
धातार्तो दिनकृत्सुतेन शशिना क्षीणेन याति क्षयम् ।
ज्ञानी चन्द्रसुतेन शुद्धवपुषा शुक्रेण भाग्यान्वितो
दीर्घायुस्त्वरुणेन्दुना च गुरुणा यज्वार्थशास्त्रप्रदः ॥ २३ ॥
षड्जगन्धारगेयाश्च वीणावेणुस्वनाःशुभाः ।
शङ्खतूर्य्यनिनादाश्च हिताःपुंसवने सदा ॥ २४ ॥
स्थापयेत् सलिलैर्गाङ्गैः सामुद्रैरपि तीर्थजैः ।
पुण्याहैर्वादनिर्घोषैः समन्त्रैरभिषेचयेत् ॥ २५ ॥
शीघ्रन्यग्रोधमूलानि रक्तस्त्रेतेन तन्तुना ।
कार्टीसूत्रवदावद्धा दध्यादापुत्रजन्मनः ॥ २६ ॥
बद्ध्वा गले पुष्करबीजमालामीपानमन्त्राहरणेन सार्द्धम् ।
तस्मिन् दिने सा गुरुगर्भवत्या रक्षा विधेया पुरुषैःसहास्त्रैः २७

जत्वादिरुद्धमशनं दृढमर्तृसङ्गं
सन्ध्यादिनानि सुरसद्मवनप्रयाणम् ।
शय्यामृतप्रसवया गमया च सार्द्धं
नारी ततः प्रभृतिसिन्धुसमागमञ्च ॥ २८ ॥

अपुत्रिणी वा या नारी मायी वा मृतपुत्रिणी ।
विधिरेवा हितं न स्याद् विशेषाद् गर्भरक्षणे ॥२९॥

इति पुंसवनविधिः ।

———ooo———

मासे षष्ठेऽष्टमे वा बलिनि सदधिपे शीतगौ चेष्टरष्टे
पुन्नामर्क्षे प्रयाते नरभवनलवांशोदये गर्भिणीनाम् ।

---

१ शास्त्रप्रदः । २ हाह ।

कुर्य्यात् सीमन्तकर्म्म त्रिदशपतिगुरौ केन्द्रगे
पापान्मन्यायविद्दृ सहजभवनगे गर्भनिष्पादन
प्रजापसैन्दवादित्यपुष्यहस्तोत्तरत्रये ।
पौष्णवासवयोरिन्दुः शुभःसीमन्तकर्म्मणि ॥ ३
तिथयःशोभनाश्छिद्ररिक्ताविष्टिविवर्ज्जिताः ।
शुभग्रहाणां कल्याणवारवर्गोदयोदयः ॥ ३२ ॥
भद्रकर्म्मशुभांशेन्दोर्छिद्रस्थानां सितेज्ययोः ।
पापात्मनायदृष्टश्च शुभःसीमन्तकर्म्मणि ॥ ३३ ॥
यानि पुंसवनोक्तानि विधानानि विशेषतः ।
तानि सर्व्वाणि निपुणः कुर्य्यात् सीमन्तकर्म्मणि

इति सीमन्तविधानम् ।

---

नवग्रहान् क्रमेणैव सर्षपैःसाक्षतैर्छिखेद् ।
अर्चयेद्धूम्रमालाद्यैः प्रसवेरिष्टमन्दिरे ॥ ३५ ॥
आढरूपकजं मूलं पर्णं वापम्फणोद्भवम् ।
नाभेरधःसमालिम्पेद् प्रसूते प्रमदासुखम् ॥ ३६ ॥
लाङ्गल्याःकाकमाच्याःवा मूलं लिम्पेद् सकाञ्जिकम्
प्रसूते मूढगर्भापि नारीसहजमाशुना ॥ ३७ ॥

इति प्रसूतविधानम् ।

---

इति गर्भदशाविधानं नाम त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

---

श्रीकौमारदशाविधानमधुना संक्षेपतःकीर्त्यते...

सञ्जातस्य विधिःशिशुग्रहबलिर्बालाभिधानक्रिया ।
वेधःकर्णयुगस्य निष्क्रमविधिर्गेहात्ततः मासनं
सीरश्चेति वयःक्रमेण विधयस्सप्तात्र सन्दर्शिताः ॥ १ ॥
कुमारग्रहनाशाय बालारिष्टजयाय च ।
ग्रहाणां सम्प्रसादाय जातकर्म्म विधीयते ॥ २ ॥
जातकर्म्मविधिं माहुः कुमारे जातमात्रके ।
मात्राभिकर्त्तनस्नानादथवा स्तनपानतः ॥ ३ ॥
त्रिष्वतीतेषु कालेषु शुभयोगे शुभोदये ।
जातकर्म्म ततःकुर्य्यादायुःश्रीवृद्धिहेतवे ॥४॥
तातः शुचिस्नानविभूषिताङ्गः प्रमोदवान् मङ्गलवादवादैः।
आनन्दितः शङ्खमृदङ्गनादैः कलामिवेन्दोस्तनयं निरीक्ष्य॥५॥
दूर्व्वाक्षतप्रसूनधूपदीपैर्नत्वा ततोरिष्टग्रहात्प्रधानम् ।
तद्धान्यपद्मोर्ध्वगतः कुमारमाघ्राय शीर्षे जपमारभेत ॥६॥
लग्नायाहं ददामि त्वां तदह्ने तन्निशे ततः ।
सोऽप्यहोरात्रकालाय सोऽर्द्धमासाय दास्यते ॥ ७ ॥
सम्पूर्णाय मासाय समर्तुभ्यः मदास्यति ।
संवत्सराय ते दद्युरसावब्दशताय च ॥ ८ ॥
तत्तुभ्यमभयं दद्यादित्येवमभयं वदन् ।
माङ्मुखो मूर्ध्नि हेमाम्भः शीकरैरभिषिञ्चतु ॥ ९ ॥
खट्वारोहश्च कर्त्तव्यो द्वादशे दशमेऽथवा ।
षोडशेवापि दिवसे द्वात्रिंशे वापि जन्मतः ॥ १० ॥
बालैः सेव्या वचासाज्या सदुग्धावाथ तैलयुक् ।
यष्टिकां सक्षयपुष्पिं वा बालः क्षीरान्वितां पिबेत् ॥११॥
वाप्यूपमम्पद्द्राक्षायुर्बलं श्रीश्च प्रवर्द्धते ।
वचाज्याग्निशिवावाब्राह्मी शुण्ठी कृष्णा निशागदम् ॥

सर्षपाग्निसैन्धवं बालं मातर्मेधाकरं लिहेत् ॥ १२ ॥

इति जातकर्मविधिः ।

---

अथ जातदिने वत्सं ग्रही गृह्णाति पश्चिनी
गात्रोद्वेगा निराहारा लालाग्रीवाविवर्त्तनम् ॥ १३ ॥
तच्चेष्टितमिदन्तस्य मन्त्राणाञ्च बलिं हरेत् ।
मत्स्यमांससुराभक्तगन्धस्रग्दीपधूपितैः ॥ १४ ॥
लिम्पेत्तद्वनकीलोध्र मञ्जिष्ठातालचन्दनैः ।
महिषाक्षेण धूपश्च द्विरात्रे भीषणी ग्रही ॥ १५ ॥
तच्चेष्टाकाशनिःश्वासौ गात्रसङ्कोचनं मुहुः ।
साजमूत्रैर्लिपेत्कृष्णा सेव्यापामार्गचन्दनैः ॥ १६ ॥
गोशृङ्गदन्तकेशैस्तु धूपयेत्पूर्व्ववद्बलिम् ।
ग्रही त्रिरात्रे घण्टाली तच्चेष्टाक्रन्दनं मुहुः ॥ १७ ॥
जृम्भनं स्तनितत्रासौ गात्रोद्वेगमरोचकम् ।
केशराञ्जनगोहस्तिदन्तसाजपयो लिपेत् ॥ १८ ॥
नखराजीं निम्बदलैर्धूपयेच्च बलिं हरेत् ।
ग्रही चतुर्थी काकोली गात्रोद्वेगः प्ररोदनम् ॥
फेणोद्‌गारो दिशादृष्टिः कुल्माषैः सर्पपैर्बलिः ॥ १९ ॥
गजदन्ताहिनिर्मोकावाजीमूत्रैः प्रलेपयेत् ।
प्रदूकारितु ग्रही षष्ठी त्रासो मोहप्ररोदनम् ॥ २० ॥
निराहारोऽङ्गविक्षेपो हरोन्मत्सादिकाबलिम् ।
राजीगुग्गुलुकुष्टेभदन्ताज्यैर्धूपलेपने ॥ २१ ॥
मुक्तकेशी ग्रही बालं दिने गृह्णाति सप्तमे ।

---

१ क २ । सासर्वैर्बलिः ।

नादःमरोदनं काशःपूतिगन्धश्च जृम्भणम् ॥ २२ ॥
धूपो व्याघ्रनखैर्लेपो वचामूत्रत्वगामयैः ।
त्रिदण्डी चाष्टमी जिह्वा चालनं श्वासरोदनम् ॥ २३ ॥
दिशानिरीक्षणे देयो मत्स्यादिः सर्व्वतो बलिः
वचालशुनसिद्धार्थहिङ्गुभिर्धूपलेपने ॥ २४ ॥
महामहेसी नवमी तच्चेष्टा वासरोदनम् ।
उद्वेगनोर्ध्वनिःश्वासौ स्वमुष्टिद्वयखादनम् ॥ २५ ॥
बक्रचन्दन कुष्ठोग्रा सर्षपैर्लेपयेच्छिशुम् ।
कपिरोमनखैर्धूपदशमी रोदनी ग्रही ॥ २६ ॥
तच्चेष्टा रोदनं शश्वद् सुगन्धो नीलवर्णता ।
धूपो निम्बेन कुष्ठोग्रारानीसर्ज्जरसैर्लिपेद् ॥ २७ ॥
बलिश्च निर्दरेल्लाजाकुल्माषचरकोदनैः ।
यावत्त्रयोदशाहं स्यादेवं धूपादिका क्रिया ॥२८॥
गृह्णाति मासिकं वत्सं पूतनासकुणी ग्रही ।
काकवद्रोदनं स्वासौ गृध्रगन्धोऽक्षिमीलनम् ॥ २९ ॥
रक्तमूत्रश्च कृच्छ्रेण गोदन्तनखधूपनम् ।
पीतवस्त्रं दिशेद्रक्तं स्रगन्धं तैलदीपनम् ॥ ३० ॥
त्रिविधं पायसं मद्यं तिलं मांसं चतुर्विधम् ।
करजायो यमदिशि सप्ताहं तैर्बलिं हरेत् ॥ ३१ ॥
द्विमासिकञ्च मकुटा वपुःपीतश्च शीतलम् ।
स्तनपानं न रोचेत तच्छुद्धिं मुखशोषणम् ॥ ३२ ॥
श्रीवाचि वृत्तनिष्पन्दाः पायसं तिलतण्डुलम् ।
अपूपमोदनं दीपं पुष्पगन्धांशुकानि च ॥ ३३ ॥
कृष्णानि दीपयेत्तस्य दीपं तैलेन सर्व्वतः ।
धूपयेन्निम्बपत्रैस्तु कुशुम्भलशुनीयुतैः ॥ ३४ ॥
तृतीया गोमुखी तस्याश्चेष्टा निद्रा मरोदनम् ।

गोगन्धो मधुगन्धो वा विन्मूत्रश्रवणं तथा ॥ ३५ ॥
जपाप्रियङ्गु पललं कुल्माषं शाकमोदनम् ।
क्षीरञ्च पिण्डकं दीपं दत्वा प्राच्यं वलिं हरेत् ॥ ३६ ॥
मध्याह्ने पञ्चपत्रेण स्नानं धूप्येत सर्षपैः ।
चतुर्थी पिङ्गला गात्रशोषणं दारुणो रवः ॥ ३७ ॥
विश्रम्भेन पयःपानम्पूतिगन्धः सिता तनुः ।
भुजस्य कम्पनं तस्याश्चिकित्सा न विधीयते ॥ ३८ ॥
पञ्चमी लवना गात्रसादनं मुखशोषणम् ।
श्रद्धया पायसम्पानं पीतवर्णं प्ररोदनम् ।
मत्स्यमांसान्नशाकाद्यैः पिष्टभेदैर्बलिं हरेत् ॥ ३९ ॥
मध्याह्ने दक्षिणाशायां षण्मासे पङ्कजी ग्रही ।
तच्चेष्टारोदनं कुक्षिशूलनं विक्रमस्वराः ॥ ४० ॥
शिखिकुक्कुटमेषाणां मांसं सक्तुकुलत्थकम् ।
मांसोदनं सुरापुष्पगन्धादिस्तैर्बलिं हरेत् ॥ ४१ ॥
शीतला सप्तमे मासे [1]निराहारोऽङ्गमाटनम् ।
दन्तखाद्यादति गन्धः समापान्नसुरातिलैः ॥ ४२ ॥
पद्मादिपुष्पकुल्मापपिष्टशाकैर्बलिं हरेत् ।
अष्टमे यमुनामोहस्तनितं मुखशोषणम् ॥ ४३ ॥
स्फोटिकाःसर्षपाकारास्सर्व्वगात्रेषु कम्पनम् ।
चिकित्सा नच कर्त्तव्या नवमी कुम्भकर्णिका ॥ ४४ ॥
अश्रद्धया पयःपानं तच्छर्दिर्दारुणो ज्वरः ।
रोदनं पाटलो गन्धी मांसं मत्स्यसुरापयः ॥ ४५ ॥
कुल्माषमन्नं पललं गन्धपुष्पञ्च दापयेत् ।
ऐशानीं दिशमाश्रित्य मध्याह्ने बलिमाहरेत् ॥ ४६ ॥

---

१ नीराहारोतमाटनम् ।

तापसी दशमे मासे निराहारोऽक्षिमलिनम् ।
उद्वेदनञ्च गात्राणां पीतं रक्तंमथोदनम् ॥ ४७ ॥
घण्टा पताका पिष्टोत्या मत्स्यमांससुरासवम् ।
*सौम्यायां दिशि मध्याह्ने बलिमेभिःसमाहरेत् ॥ ४८ ॥*
बलिमेकादेशे मासे ग्रही गृह्णाति राक्षसी ।
ताच्छिद्रं नेत्रयोरन्धं तस्य नैव चिकित्सितम् ॥ ४९ ॥
चपला द्वादशे मासे वासःस्वासश्च चेष्टितम् ।
कुल्मापपुष्पदग्धान्नतिलचूर्णैर्विधानवित् ॥ ५० ॥
माहेन्द्रदिशि मध्याह्ने सप्तरात्रिं बलिं हरेत् ।
एताःस्युर्मासिकं ग्राह्यं पूतनापदपूर्वकात् ॥ ५१ ॥
द्वितीये वत्सरे बालं ग्रही गृह्णाति यातना ।
पतनं रोदनं दाहो निराहारोऽक्षिमीलनम् ॥ ५२ ॥
मत्स्यमांसं तिलं मद्यं गुळं स वोलिका दधि ।
कुल्मापलाजागन्धादिस्तैः प्राच्यां बलिमाहरेत् ॥ ५३ ॥
स्नानं पञ्चदलैर्धूपं केशगोदन्तगोक्षुरैः ।
तृतीये वत्सरे बालं ग्रही गृह्णाति रोदनी ॥५४॥
विन्मूत्रसक्तसंमिश्रज्वरो हस्तस्य कम्पनम् ।
प्ररोदनं शुद्धगात्रं पद्मकेशरसन्निभम् ॥ ५५ ॥
गुलोदनं तिलं पूपं कुल्मापं स्विन्नफलं शूपम् ।
दधिसक्तुफलं लाजा प्रतिमाशालिपिष्टजा ॥ ५६ ॥
एभिःस पुष्पगन्धाद्यैः प्राच्यां दिशि बलिं हरेत् ।
स्नापयेत् पञ्चपत्रैस्तु धूपैराजीफणित्वचा ॥ ५७ ॥
चतुर्थे चटकासोमा ज्वरःसर्व्वाङ्गसादनम् ।
अवीक्षणं मन्दाहारो वामपादस्य कम्पनम् ॥ ५८ ॥

---

१ दध्यन्न ।

तिललाजाश्चकुल्माष मत्स्यमांससुरादधि ।
प्रतिमां फलकस्याञ्च कौवेर्यां दिशि दापयेत् ॥ ५९ ॥
स्नानं पञ्चदलैर्धूपः पिञ्जेन क्षुररोमभिः ।
चञ्चला पञ्चमे वर्षे ज्वरश्वासोऽङ्गसादनम् ॥ ६० ॥
बालस्य तिलकृष्णान्नैः कालेऽनुक्ते बलिं निशि ।
धूपयेन् मेषशृङ्गेण स्नानं स्यात् पञ्चपत्रयुक् ॥ ६१ ॥
पलासोदुम्बराश्वत्थवटबिल्वदलं हितत् ।
धावती वत्सरे षष्ठे वैवर्ण्यं मुखशोषणम् ॥ ६२ ॥
उद्वेजनं बहुमूत्रस्रवणं गात्रसादनम् ।
तिलोद्भवसुरामत्स्यमांसैःपक्वसुरादधि ॥ ६३ ॥
कृसरं पायसञ्चैभिः सप्तरात्रिं बलिं हरेत् ।
स्नानं पञ्चदलैर्धूपो लशुनीकेशरादिभिः ॥ ६४ ॥
सप्तमे यमुनाच्छार्दिनाना हैरोऽङ्गसादनम् ।
मत्स्यं मासं सुरासक्तुकृसरम्पायसं दधि ॥ ६५ ॥
एभिःस बोलिकापूपैस्त्रिरात्रिं च हरेद्बलिं ।
स्नानं पञ्चदलैर्धूपो गोशृङ्गक्षुररोमभिः ॥ ६६ ॥
जाते चेदष्टमे वर्षे निराहारः प्रकोपनम् ।
मत्स्यमांसं दधि क्षौद्रं घृतान्नं पायसं पयः ॥ ६७ ॥
एतैश्च कृसरापूपैर्बलिं दत्वार्द्धरात्रतः ।
चत्वरस्ते तिलैःकुण्डे पञ्चाहममुना हुनेत् ॥ ६८ ॥
कुष्माण्डिनी भगवती रजनी समुदिताधुना ।
ज्ञापयाति मुञ्चदह सरवालकान् गच्छ ॥ ६९ ॥
राजी निम्बदलैर्धूपः कालिनी नवमी ग्रही ।
तच्चेष्टा गर्ज्जनं त्रासो बाहोरस्फो ७०
दूपसद्ध
ॐ मुञ्चपञ्चदहनय

.नेन पूर्ववद्बुध्वा कुर्यात् स्नानं सधूपनम् ।
(ग्रामे कलहंसो स्याद्दाहोऽङ्गकृशता ज्वरः ॥ ७२ ॥
बोलिकापूपदध्यन्नैः पञ्चरात्रिं बलिं हरेत् ।
लेपयेत्तं वचाकुष्ठलशुनैः सर्षपान्वितः ॥ ७३ ॥
धूपं निम्बदलैःकुर्यात् सगोरोमगजाद्विजैः ।
एकादशे देवदूती हासःपानाशनं बहु ।
विकारा बहवोऽङ्गानां नित्यं [1]वल्हीनधावनम् ॥ ७४ ॥
यामियामीतिविन्मूत्रस्रवणं स्वगृहे क्षणम् ।
गात्रोद्वेगोऽक्षिरोगश्च क्रीडनं निष्ठुरं वचः ॥ ७५ ॥
कोद्रवान्नं लाजदधि कुल्मापपूपबोलिकाः ।
पक्वं मांसं स्विन्नमत्स्यं मद्यं पुष्पं हयारिजम् ॥ ७६ ॥
बलिःस्यात् कुंकुमाद्यैःस्यात् स्नापनं पञ्चमाषिकम् ।
धूपयेत्तगरोपेतैर्महिषाक्षनखामयैः ॥ ७७ ॥
बालिका द्वादशे वर्षे श्वासो नयनयोर्गदः ।
काकारवश्च तच्चेष्टा शाककुल्मापसक्तवः ॥ ७८ ॥
बोलिकामोदकापूपसक्तुलाजपयोघृताः ।
गुडं पक्वं मत्स्यमांसं त्रिरात्रं तैर्बलिं हरेत् ॥ ७९ ॥
राजिनिम्बदलैर्धूपो वायसी च त्रयोदशे ।
तच्चेष्टा मुखवाद्याङ्गं सादनं मुखशोषणम् ॥ ८० ॥
रक्तास्रगन्धमाल्याद्यैर्बलिःपञ्चदलैःश्रवः ।
राजीनिम्बदलैर्धूपो यक्षिणी च चतुर्दशे ॥ ८१ ॥
शूलनं ज्वरदाहौच पिबेच्चाभ्यञ्जयेत् घृतम् ।
शाल्योदनं सुरामांसमत्स्यकुल्मापपायसैः ॥ ८२ ॥
सलाजकपर्दैर्धान्यमध्याह्ने त्रिदिनं बलिम् ।
स्नानं पञ्चदलैःकुर्यान्मुञ्चकास्यात् त्रिपञ्चके ॥ ८३ ॥

---

१ वल्कल ।

तचेष्टास्रक्श्रवःशश्वत् कुर्य्यान्नात्र चिकित्सितम् ।
वानरी षोड़शे भूमौ वादो निद्रा सदा ज्वरः ॥ ८४ ॥
पायसं केवलं पूपं कुल्माषं क्रषरं सुरा ।
एतैःसफल्गुपैःकुष्टैः मदोषे त्रिदिनं वलिः ॥ ८५ ॥
स्नानं पञ्चपत्रेण धूपनं चन्दनेन च ।
पद्मगन्धीसप्तदीशे गात्रोद्वेगःभरोदनम् ॥ ८६ ॥
मुश्चामीतिवचोहासः स्नापयेत् पञ्चपत्रकैः ।
कुल्माषक्रषरापूपातिलापिष्टान्नफल्गुपैः ॥ ८७ ॥
सलाजदधिभिःमाच्यां मध्याह्ने त्रिदिनं वलिः ।
धूपेनवाजगोश्रृङ्गैः कुमारी वालिका ततः ॥ ८८ ॥
पूर्व्वाश्च वर्षिका ग्राह्यं कुमारीपदपूर्व्विका ।
तच्चेष्टा वमनं स्वासो निराहारोऽङ्गसादनम् ॥ ८९ ॥
नास्ति तस्य चिकित्सैवं मोक्ता वालग्रहाःपृथक् ।
ओंचामुण्डे सावरीकण्टनकेशी भगवति ह्रींहुं ॥ ९० ॥
मुश्च रक्षां कुरुकुरुवलिं गृह्णफट् ।
वालग्रहेषु वलिदानकृदेषमन्त्रः ।

ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणस्तथा ।
रक्षन्तु त्वरितं वालं मुञ्चयन्तु कुमारकम् ॥ ९१ ॥
नीराजनाय वलिकर्म्मविधौ स्मृऽतोयम् ।

ह्रींकुष्माण्डकारिणं दूषणा
भगवती चामुण्डेओंमुश्च ॥
दहसरवालकान् गच्छ गच्छ
होमंतिलाविभिरत्रैःकरोतु मन्त्री ॥
चामुण्डे नमोहिन्येषु ओंह्रींदुष्टग्रहानहुं तत्र ।
गच्छन्तु गुग्गुका पत्रस्थानकुरुकुरु स्द्रो ज्ञापयति ॥

स्यात्सर्व्वकर्म्मक्रमपञ्चवर्गोभिषेके ॥ चण्डी मकरणार्चिनमो
यिनिर्दिष्टाचान्तःमनामार्द्धं शचीवचण्डम् ॥ हुंफट्
शिरोऽन्तो मनुरुपहृन्यादूवान्सप्रदान् वस्त्रसनपादिकर्म ॥
तारात्मयुग्ममुदकं शिर एभिरङ्गैः
शक्तिमना च शिशुना चयनी शशाङ्के ।
अर्द्धेन्दुकैर्यदिरघोवदनैः परीत-
चक्रं तदाशु शिशुरोदनमुत्तीक्षणोति ॥ ९२ ॥

इतिबालग्रहविधिः ।

---

ब्राह्मणे द्वादशे क्षात्रो दशमेऽहनि जन्मनः ।
वैश्यस्तु षोडशे शूद्रो द्वात्रिंशे नाम कारयेत् ॥ ९३ ॥
उत्तराश्विविशाखायां रेवतीहस्तयोरपि ।
मूलवारुणिपुष्येषु श्रवणादितयोरपि ॥ ९४ ॥
रोहिणीस्वातिमैत्रेषु सोत्सव नाम कारयेत् ।
उल्कावधिष्ण्यतिक्रान्तौ सदाक्रमासनेन वा ॥ ९५ ॥
विदोषास्तिथयःशस्ताः सौम्यवारोदयादयः ।
द्वादशस्थानगा नेष्टाः सर्व्वे स्युर्नामकर्म्मणि ॥ ९६ ॥
राशयस्तु स्थिरश्रेष्ठाः द्विस्वभावाः शुभैर्युताः ।
शिष्टास्तु मशुभाश्चापि नेष्टास्युर्नामकर्म्मणि ॥ ९७ ॥
त्रिषडायगताः पापाश्चन्द्रो लग्नगतःशुभः ।
शुक्रो भवो गुरुःकेन्द्रे व्ययं शुद्धञ्च शोभनम् ॥ ९८ ॥
मेषादिषट्सु युगलोकधनं जयाग्नि
रामद्विकाश्चरगताः कथिताः क्रमेण ।
काद्यास्तुलादिषु च पञ्चसु पञ्चवर्गाः
याद्या भवन्ति लिपयश्चरमे च राशौ ॥ ९९ ॥

---

१ सचती ।

गाङ्गल्याभोपकाराय मारम्भारिःखरःकुरुः ।
गोपाङ्कक्रूटिम्मापकुड्डापीतारःक्रमः ॥ १०० ॥
शान्त्यादिषु त्रिविधः स्वरान्तौ स्वनीयुजौ ।
कनटतपादावर्गाः कुजभृगुबुधजीवभानुपुत्राणाम् ।
शशिनो याया वर्गाः स्वरास्त्वकारादयोर्कस्य ॥ १०१ ॥

सर्वादिमध्यान्तगलौ त्रिकौ तौ
म्लौम्भौजरौस्तौ च गणाः क्रमात्ते ।
भूस्वर्गचन्द्राम्बुवियत्तदग्नि
वायव्यम्बराख्याश्च तथा स्युरष्टौ ॥ १०२ ॥

शुभाःस्युःस्थिरराशीनां क्षितिचन्द्रार्कवायवः ।
चरराशीव राशीनां द्योसमुद्राम्बरानिलाः ।
शोभनाः द्विस्वभावानामिन्दुक्षितिनभोनलाः ॥ १०३ ॥
अहनक्षत्रराशीनामक्षरैश्च गणैरपि ।
सुहृन्नामाक्षरे[1] नाम्ये युग्माक्षरसमाह्वयम् ॥ १०४ ॥
इदं विधानमुद्दिष्टं गीतेऽपि श्लोकबन्धने ।
वीरनाम्नि च मन्त्रे च मित्रेऽपि च विशेषतः ॥ १०५ ॥
बालिकां भूषयेत् प्राज्ञो वलयैः कटिदामभिः ।
अष्टाविंशे दिने चाथ द्वात्रिंशे वापि जन्मतः ॥ १०६ ॥

इति नामविधिः ।

---

कर्णवेधेऽङ्गहानिःस्यात्तया लक्ष्मीक्षयो भवेत् ।
इति मत्वा न कुर्वन्ति केचिच्छ्रवणवेधनम् ॥ १०७ ॥
अङ्गहानिर्यदि प्राहुः कर्णवेधनमात्रतः ।
कथं नु विदधीरन्ते पूर्वतो नाभिकर्तनम् ॥ १०८ ॥
ततः शास्त्रानुसारेण विधेयं श्रुतिवेधनम् ।

---

१ सुहृत्समाह्वयः ।

जन्मतो दशमे चाह्नि द्वादशे वाथ षोडशे ॥ १०९ ॥
सप्तमे मासि वा कुर्य्यादष्टमे वा विचक्षणः ।
उक्तकालव्यतिक्रान्तावायुग्माब्देऽपि कारयेत् ॥ ११० ॥

पुष्यादितिश्रवणसोमशिवश्रविष्ठाः
तिष्योत्तरद्वयपसहस्तकराः प्रशस्ताः ।
पर्व्वाष्टमीविरहितास्तिथयो विरिक्ता
विष्टीतराश्च शुभदाः शुभवासराद्याः ॥ १११ ॥

इपवर्जाःस्थिराःसर्व्वे न शुभा मकराजहौ ।
मध्यमा अवशिष्टास्तु शोभनाः कर्णवेधने ॥
रन्ध्रारिव्ययगोनेष्टो गुरुःशेषेषु शोभनः ।
सुतरन्ध्रगताःसौम्याः नेष्टाः स्युः कर्णवेधने ॥ ११२ ॥
षट्सप्ताष्टमगः शुक्रो न शुभोऽन्यत्र शोभनः ।
इन्दुस्तृतीये पुत्रस्त्री धर्म्मकर्म्मायगः शुभः ॥११३॥
विशुद्धमष्टमस्थानं पापाश्च त्रिषडायगाः ।
लग्नं दृहस्पतिक्षत्रं शोभने कर्णवेधने ॥ ११४ ॥
अभ्यर्च्य दैवज्ञभिषग्वरेण्यौ समङ्गलं शङ्खमृदङ्गनादैः ।
यथाक्रमं दक्षिणवामकर्णौ पुंसस्त्रियोस्तौ विपरीतवेध्यौ॥११५
कुटजं नरवीरश्च साङ्गलीं चित्रकं तथा ।
अपामार्गोऽश्वगन्धा च शुष्कं संचूर्ण्य तैलयुक् ॥ ११६ ॥
लेपयेत् कर्णवल्यन्तु मांसछावस्थिरा भवेत् ।
इदं सर्व्वत्र निर्दिष्टं मूलावयवपूरणे ॥ ११७ ॥
अश्विनीहस्तमैत्रेषु शुभवारांशकोदये ।
सम्पूर्णमण्डले चन्द्रे दापयेच्छ्रुतिभूषणम् ॥ ११८ ॥
संसा लोके पशूनाञ्च दासानाञ्च विधीयते ।

१ क्षोम ।

पिता च मातापि च भोजयेत्तम् ॥ १४० ॥
पूर्णेन्दुमण्डलं तत्स्थं जलं वा चतुरीयकम् ।
ध्यात्वा तं भोजयेदेवमायुरारोग्यमश्नुते ॥ १४१ ॥
शुभाङ्गस्थे निशानाथे रोहिण्यां पितृभेऽथवा ।
यद्दसादिफलान्यद्याद् सिंहलग्ने शुभेक्षिते ॥ १४२ ॥
फलाग्रभुक्तौ तु झषः मपूनःपर्णाग्रभुक्तावजद्वश्विकौ च ।
इसो क्षणो वाजिगजोपयुक्तो वालान्नभुक्ताविव सर्व्वमाहुः १४३
नवे कनकपात्रादौ कटकादौ च नूतने ।
अन्नप्रासनवद् प्राहुर्विधानं विधिवेदिनः ॥ १४४ ॥
इत्यन्नप्रासविधिः ।

———ooo———

कुर्व्वन्त्सकाले ये क्षौरं तेषां वर्षशतायुषाम् ।
अर्व्वाग्मरणमभ्येति ततः क्षौरं विचारयेत् ॥ १४५ ॥
तृतीयेऽब्दे शिशोर्गर्भात्पञ्चमे सप्तमे ऽपि वा ।
सहोपनयने वापि केचित् क्षौरविधिं जगुः ॥१४६ ॥
वर्ज्जयेद् दधिमासञ्च दक्षिणायनमेव च ।
उपरागावसानञ्च मूढत्वं जीवशुक्रयोः ॥ १४७ ॥
चित्राश्विनीमृगशिरोऽदितिहस्तपौष्णा
ज्येष्ठाश्रुतिद्वयहरयः प्रवरास्तु चौले ।
स्वात्युत्तरत्रयधराम्बुधयश्च मध्यः
सौम्योदयांशकदिनानि शुभावहानि ॥ १४८ ॥
पर्व्वरिक्ताष्टमी षष्ठी प्रतिपद्द्वादशी तिथिः ।
वर्ज्जनीयाः शुभाःकेचित् पूर्णञ्च द्वादशीं विदुः ॥ १४९ ॥

